मनसश्च परा बुद्धिर्बुद्धेरात्मा महान् परः ॥ १० ॥
महतः परमव्यक्तमव्यक्तात् पुरुषः परः ।

---

त्मकं भूतसूक्ष्मम् । बुद्धेरात्मा सर्व्वप्राणिबुद्धीनां प्रत्यगात्मभूतत्वादात्मा महान्सर्व्वमहत्त्वादव्यक्ताद्यत्प्रथमं जातं हैरण्यगर्भतत्त्वं बोधा बोधात्मकं महानात्मा बुद्धेः पर इत्युच्यते ॥ १० ॥

महतोऽपि परं सूक्ष्मतरं प्रत्यगात्मभूतं सर्व्वमहत्तरञ्चाव्यक्तं सर्व्वस्य जगतो बीजभूतमव्याकृतनामरूपसतत्त्वं सर्व्वकार्य्यकारणशक्तिसमाहाररूपमव्यक्तमव्याकृताकाशादिनामवाच्यं परमात्मन्यो-

---

षया । न त्वर्थादीनां परत्वं प्रतिपादयिषितम् । प्रयोजनाभावाद्वाक्यभेदप्रसङ्गाच्चेति । सुरनरतिर्य्यगादिबुद्धीनां विधारकत्वात्प्रातत्यगमनादात्मोच्यते । सूत्रसञ्ज्ञकं हैरण्यगर्भतत्त्वमित्यर्थः । बोधाबोधात्मकमिति ज्ञानक्रियाशक्त्यात्मकमित्यर्थः । अथवाऽधिकारिपुरुषाभिप्रायेण बोधात्मकत्वमव्यक्तस्याद्यः परिणाम उपाधिरपञ्चीकृतभूतात्मकस्तेन रूपेणाबोधात्मकत्वं हिरण्यगर्भस्येत्यर्थः ॥ १० ॥

प्रलये सर्व्वकार्य्यकारणशक्तीनामवस्थानमभ्युपगन्तव्यं शब्दार्थसर्व्वशक्तिलक्षणस्य नित्यत्वनिर्व्वाहाय । तासां शक्तीनां समाहारो मायातत्त्वं भवति । ब्रह्मणोऽसङ्गत्वादिति शक्तिसमाहाररूपमव्यक्तमित्यर्थः । तद्धेदं तर्ह्यव्याकृतमासीदेतस्मिन् खल्वक्षरे गार्ग्याकाशश्चोतश्च प्रोतश्च । मायान्तु प्रकृतिं विद्यान्मायिनन्तु महेश्वरमित्यादिश्रुतिप्रसिद्धेश्चाव्यक्तस्य ॥ तस्य साङ्ख्याभिमतप्रधानाद्वैलक्षण्यमाह । परमात्मनीति ॥ शक्तित्वेनाद्वितीयत्वाविरोधित्वमाह । वटकणिकायामिवेति ॥ भाविवटवृक्षशक्तिम-

पुरुषान्न परं किञ्चित्सा काष्ठा सा परा गतिः॥११॥
एष सर्व्वेषु भूतेषु गूढात्मा न प्रकाशते ।

तप्रोतभावेन समाश्रितम् । वटकणिकायामिव वटवृक्षशक्तिः ।
तस्मादव्यक्तात्परः सूक्ष्मतमः सर्वकारणकारणत्वात्प्रत्यगात्मत्वाच्च
महांश्च अत एव पुरुषः सर्वपूरणात्ततोऽन्यस्य परस्य प्रसङ्गं
निवारयन्नाह । पुरुषान्न परं किञ्चिदिति । यस्मान्नास्ति पुरुषा-
च्चिन्मात्रघनात्परं किञ्चिदपि वस्त्वन्तरं तस्मात्सूक्ष्मत्वमहत्त्वप्रत्य-
गात्मत्वानां सा काष्ठा निष्ठा पर्य्यवसानम् । अत्र हि इन्द्रियेभ्य
आरभ्य सूक्ष्मत्वादिपरिसमाप्तिः । अत एव च गन्तॄणां सर्वगति-
मतां संसारिणां सा परा प्रकृष्टा गतिः । यद्गत्वा न निवर्त्तत
ति स्मृतेः ॥ ११ ॥

नन्ु गतिश्चेद्गन्त्रापि च भवितव्यं कथं यस्माद्भूयो न जायत
इति । नैष दोषः । सर्वस्य प्रत्यगात्मत्वादवगतिरेव गतिरित्यु-
पचर्यते । प्रत्यगात्मत्वञ्च दर्शितमिन्द्रियमनोबुद्धिपरत्वेन । यो

---

वटवीजं स्वशक्त्या न सद्द्वितीयं कथ्यते तद्वद्ब्रह्मापि न माया-
शक्त्या सद्द्वितीयम् । सत्त्वादिरूपेण निरूप्यमाणे व्यक्तिरस्य नास्ती-
त्यव्यक्तम् । ततोऽव्यक्तशब्दादप्यद्वैताविरोधित्वं द्रष्टव्यम् । सर्व्वस्य
प्रपञ्चस्य कारणमव्यक्तम् । तस्य परमात्मपारतन्त्र्यात्परमात्मन
उपचारेण कारणत्वमुच्यते न त्वव्यक्तवद्विकारितयाऽनादित्वाद-
व्यक्तस्य पारतन्त्र्यं च पृथक्सत्त्वे प्रमाणाभावादात्मनस्तयैव
सत्तावत्त्वाच्चेत्यर्थः ।। ११ ।।

पारयिष्णव इति संसारपारं गता इत्यर्थः ।। न प्रकाशते
चेत्तर्हि नास्त्येवेति न वाच्यं लिङ्गदर्शनादित्याह । दर्शनश्रव-

# दृश्यते त्वग्र्या बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः ॥१२॥

हि गन्ता सोऽयमप्रत्यग्रूपं गच्छति अनात्मभूतं न विपर्ययेण। तथा च श्रुतिः । अनध्वगा अध्वसु पारयिष्णव इत्याद्याः । तथा च दर्शयति प्रत्यगात्मत्वं सर्वस्य । एष पुरुषः सर्वेषु ब्रह्मादिस्तम्ब-पर्यन्तेषु भूतेषु गूढः संवृत्तो दर्शनश्रवणादिकर्म्माविद्यामाया-च्छन्न आत्मा न प्रकाशते आत्मत्वेन कस्यचिदूहोतिगम्भीरा दुरवगाह्या विचित्रा माया चेयम् । यदयं सर्वो जन्तुः परमा-र्थतः परमार्थसतत्त्वोऽप्येवम्बोध्यमानोऽहं परमात्मेति न गृह्णा-त्यनात्मानं देहेन्द्रियादिसङ्घातमात्मनो दृश्यमानमपि घटादि-वदात्मत्वेनाहममुष्य पुत्र इत्यनूच्यमानोऽपि गृह्णाति । नूनं पर-स्यैव मायया मोमुह्यमानः सर्व्वो लोकोऽयं बंभ्रमीति ॥ तथा च स्मरति । नाहं प्रकाशः सर्व्वस्य योगमायासमावृत इत्यादिः । ननु विरुद्धमिदमित्युच्यते । मत्वा धीरो न शोचति न प्रकाशत इति च । नैतदेवमसंस्कृतबुद्धेरविज्ञेयत्वान्न प्रकाशत इत्युक्तम् । दृश्यते तु संस्कृतयाऽग्रयाग्रमिवाग्रया तया एकाग्रतयोपेतये-त्येतत्सूक्ष्मया सूक्ष्मवस्तुनिरूपणपरया । कैः । सूक्ष्मदर्शिभिरि-न्द्रियेभ्यः परा ह्यर्था इत्यादिप्रकारेण सूक्ष्मतापारम्पर्यदर्शनेन परं सूक्ष्मं द्रष्टुं शीलं येषान्ते सूक्ष्मदर्शिनस्तैः सूक्ष्मदर्शिभिः पण्डितैरिति ॥ १२ ॥

---

णादीति ॥ कर्म्माख्यस्येति तयोक्तेः । जीवस्य स्वप्रकाशत्वे ब्रह्मा-त्मत्वे सत्यपि योऽयं ब्रह्मस्वरूपाऽनवभासः स केनापि प्रतिबन्धेन कृत इति कल्प्यते ॥ तच्च प्रतिबन्धकं न वस्तुज्ञानान्युक्तम् । श्रुते-र्बाधप्रसङ्गात् । ततोऽविद्यैव प्रतिबन्धिकेत्याह । अविद्यामाया-

यच्छेद्वाङ्मनसी प्राज्ञस्तद्यच्छेज्ज्ञान आत्मनि। ज्ञानमात्मनि महति नियच्छेत्तद्यच्छेच्छान्त आत्मनि॥ १३॥

उत्तिष्ठत जाग्रत प्राप्य वरान्निबोधत। क्षुरस्य

---

एतत्प्रतिपत्त्युपायमाह। यच्छेन्नियच्छेदुपसंहरेत्प्राज्ञो विवेकी। किम्। वाग्वाचम्। वागत्रोपलक्षणार्था सर्व्वेन्द्रियाणाम्। क्व। मनसी मनसि। छान्दसं दैर्घ्यम्। तच्च मनो यच्छेज्ज्ञाने प्रकाशस्वरूपे बुद्धावात्मनि। बुद्धिर्हि मनआदिकरणान् प्राप्नोतीत्यात्मा तेषां प्रत्यग् ज्ञानं बुद्धिमात्मनि महति प्रथमजे नियच्छेत्। प्रथमजवत्स्वच्छस्वभावमात्मनो विज्ञानमापादयेदित्यर्थः। तच्च महान्तमात्मानं यच्छेच्छान्ते सर्व्वविशेषप्रत्यस्तमितरूपमविक्रिये सर्व्वान्तरे सर्व्वबुद्धिप्रत्ययसाक्षिणि मुख्ये आत्मनि॥ १३॥

एवं पुरुषे आत्मनि सर्व्वं प्रविलाप्य नामरूपकर्म्मत्रयं यन्मि-

---

थ्याज्ञानविजृम्भितं क्रियाकारकफललक्षणं स्वात्मयाथात्म्यज्ञानेन मरीच्युदकरज्जुसर्पगगनमलानीव मरीचिरज्जुगगनस्वरूपदर्शनेनैव स्वस्थः प्रशान्तः कृतकृत्यो भवति यतोऽतस्तद्दर्शनार्थम्

---

च्छन्न इति॥ निदिध्यासप्रचयेनैकाग्रमायत्तमन्तःकरणं यदा सहकारि सम्पद्यते तदा तत्सहकृतान्महावाक्यादहं ब्रह्मास्मीति या बुद्धिवृत्तिरुत्पद्यते तस्यामभिव्यक्तो ब्रह्मभाव इति स्वतोऽपरोक्षतया व्यवह्रियत इति दृश्यत्वमुपचर्य्यते। यो हि यत्प्रयुक्तव्यवहारः स तद्दृश्य इति प्रसिद्धम्। क्रमेणैवं विषयदोषदर्शनेनाभ्यासेन च बाह्यकरणान्तःकरणव्यापारप्रविलापने सति प्रविलापनकर्त्तुः कः पुरुषार्थः सिध्यतीत्याशङ्क्याह। पुरुष इत्यादिना॥ ॥ १२॥ १३॥

यावद्यावद्गुणापचयस्तावत्तावत्तारतम्येन सौक्ष्म्यं दृष्टं पृथि-

धारा निशिता दुरत्यया दुर्गम्पथस्तत्कवयो वद-
न्ति ॥ १४ ॥

थ्याज्ञानविजृम्भितं क्रियाकारकफललक्षणं स्वात्मयाथात्म्यज्ञा-
नेन मरीच्युदकरज्जुसर्पगगनमलानीव मरीचिरज्जुगगनस्वरूप-
दर्शनेनैव स्वस्थः प्रशान्तः कृतकृत्यो भवति यतोऽतस्तद्दर्शनार्थ-
मनाद्यविद्याप्रसुप्ता उत्तिष्ठत हे जन्तवः आत्मज्ञानाभिमुखा
भवत जाग्रत अज्ञाननिद्राया घोररूपायाः सर्वानर्थबीजभू-
तायाः क्षयं कुरुत । कथम् । प्राप्य उपगम्य वरान् । प्रकृष्टाना-
चार्यांस्तद्विदस्तदुपदिष्टं सर्वान्तरमात्मानमहमस्मीति निबोधत
अवगच्छत । न ह्युपेक्षितव्यमिति श्रुतिरनुकम्पयाऽऽह । मातृ-
वदतिसूक्ष्मबुद्धिविषयत्वाद्विज्ञेयस्य किमिव सूक्ष्मबुद्धिरित्युच्यते
क्षुरस्य धाराग्रं निशिता तीक्ष्णीकृता दुरत्यया । दुःखेनात्ययो
यस्याः सा दुरत्यया यथा सा पद्भ्यां दुर्गमनीया । तथा दुर्गं
दुःसम्पाद्यमित्येतत्पथः पन्थानं तत्त्वज्ञानलक्षणं मार्गं कवयो
मेधाविनो वदन्ति ॥ १४ ॥

ज्ञेयस्यातिसूक्ष्मत्वात्तद्विषयस्य ज्ञानमार्गस्य दुःसम्पाद्यत्वं वद-
न्तीत्यभिप्रायस्तत्कथमतिसूक्ष्मत्वं ज्ञेयस्येत्युच्यते । स्थूला तावदियं
मेदिनी शब्दस्पर्शरूपरसगन्धोपचिता सर्वेन्द्रियविषयभूता ।
तथा शरीरं तत्रैकैकगुणापकर्षेण गन्धादीनां सूक्ष्मत्वमहत्त्ववि-
शुद्धत्वनित्यत्वादितारतम्यं दृष्टमवादिषु यावदाकाशमिति । ते
गन्धादयः सर्व एव स्थूलत्वाद्विकाराः शब्दान्ता यत्र न सन्ति

व्यादिषु परमात्मनि तु गुणानुमत्यन्ताभावान्निरतिशयसौक्ष्म्यं

अशब्दमस्पर्शमरूपमव्ययं तथाऽरसन्नित्यमगन्धवच्च यत्। अनाद्यनन्तम्महतः परन्ध्रुवं निचाय्य तन्मृत्युमुखात्प्रमुच्यते ॥ १५ ॥

नाचिकेतमुपाख्यानं मृत्युप्रोक्तं सनातनम्।

किमु तस्य सूक्ष्मत्वादिनिरतिशयत्वं वक्तव्यमित्येतद्दर्शयति-श्रुतिः। अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यदेतद्व्याख्यातं ब्रह्माव्ययं यद्धि शब्दादिमत्तद्व्येतीदन्त्वशब्दादिमत्त्वादव्ययं न व्येति न क्षीयतेऽत एव च नित्यं यद्धि व्येति तदनित्यमिदन्तु न इतश्च नित्यमनाद्यविद्यमानमनादि कारणमस्य तदिदमनादि। यच्चादिमत्तत्कार्य्यत्वादनित्यं कारणे प्रलीयते। यथा पृथिव्यादि। इदन्तु सर्वकारणत्वादकार्य्यमकार्य्यत्वान्नित्यं न तस्य कारणमस्ति यस्मिंल्लीयेत तथाऽऽनन्त्यमविद्यमानोऽन्तो ऽस्य तदनन्तं यथा कदल्यादेः फलादिकार्य्योत्पादनेनाप्यनित्यत्वं दृष्टम्। न च तथाप्यन्तवत्त्वं ब्रह्मणोऽतोऽपि नित्यं महतो महत्त्वात्तद्बुद्ध्याख्यात्परं विलक्षणं नित्यविज्ञप्तिस्वरूपत्वात्सर्व्वसाक्षि हि सर्व्वभूतात्मत्वाद्ब्रह्म। उक्तं ह्येष सर्व्वेषु भूतेष्वित्यादि। ध्रुवञ्च कूटस्थं नित्यं न पृथिव्यादिवदापेक्षिकं नित्यत्वम्। तदेवम्भूतं ब्रह्मात्मानं निचाय्यावगम्य तमात्मानं मृत्युमुखान्मृत्युगोचरादविद्याकामकर्म्मलक्षणात्प्रमुच्यते वियुज्यते ॥ १५ ॥

प्रस्तुतविज्ञानस्तुत्यर्थमाह श्रुतिः। नाचिकेतं नचिकेतसा प्राप्तं नाचिकेतं मृत्युना प्रोक्तं मृत्युप्रोक्तमिदमाख्यानं वल्लीत्रयलक्षणं सनातनं चिरन्तनं वैदिकत्वादुक्त्वा ब्राह्मणेभ्यःश्रुत्वा

सिद्ध्यतीत्याह। स्थूला तावदित्यादिना ॥१४॥१५॥१६॥१७॥

उक्त्वा श्रुत्वा च मेधावी ब्रह्मलोके महीयते ॥ १६॥

य इमं परमं गुह्यं श्रावयेद्ब्रह्मसंसदि । प्रयतः श्राद्धकाले वा तदानन्त्याय कल्पते तदानन्त्याय कल्पत इति ॥ १७ ॥

इति प्रथमाध्याये तृतीया वल्ली ॥ ३ ॥

इति प्रथमोऽध्यायः समाप्तः ॥

पराञ्चि खानि व्यतृणत्स्वयम्भूस्तस्मात्पराङ्प-

---

ऽऽचार्य्येभ्यो मेधावी ब्रह्मैव लोको ब्रह्मलोकस्तस्मिन् ब्रह्मलोके महीयते आत्मभूत उपास्यो भवतीत्यर्थः ॥ १६ ॥

यः कश्चिदिमं ग्रन्थं परमं प्रकृष्टं गुह्यं गोप्यं श्रावयेद्ग्रन्थतोऽर्थतश्च ब्राह्मणानां संसदि ब्रह्मसंसदि प्रयतः शुचिर्भूत्वा श्राद्धकाले वा श्रावयेद्भुञ्जानम् । तच्छ्राद्धमस्यानन्त्यायानन्तफलाय कल्पते समर्थते । द्विर्वचनमध्यायपरिसमाप्त्यर्थम् ॥ १७ ॥

इति श्रीगोविन्दभगवत्पूज्यपादशिष्यपरमहंसपरिव्राजकाचार्य्यस्य श्रीशङ्करभगवतः कृतौ कठोपनिषद्भाष्ये प्रथमोऽध्यायः॥१॥

एष सर्व्वेषु भूतेषु गूढ़ाऽऽत्मा न प्रकाशते । दृश्यते त्वग्र्यया बुद्ध्या इत्युक्तम् । कः पुनः प्रतिबन्धोऽग्र्याया बुद्धेर्येन तदभावादात्मा न दृश्यत इति तद्दर्शनकारणप्रदर्शनार्था वल्ली आरभते ।

---

अनादिरविद्याप्रतिबन्धः प्रागुक्तोऽधुनाऽऽगन्तुकप्रतिबन्धदर्शनायोत्तरवल्ल्यारम्भ इति सम्बन्धमाह । एष सर्व्वेष्वित्यादिना॥

इन्द्रियाण्यन्तर्मुखानि स्युस्तदा तान्यात्मनिष्ठतयाऽमृतत्वमापुरत इन्द्रियाणि वहिर्मुखानि सृष्टानीति यत्तेषां हननमेव कृतमि-

अशब्दमस्पर्शमरूपमव्ययं तथाऽरसन्नित्यमगन्धवच्च यत्। अनाद्यनन्तम्महतः परन्ध्रुवं निचाय्य तन्मृत्युमुखात्प्रमुच्यते॥ १५॥

नाचिकेतमुपाख्यानं मृत्युप्रोक्तꣳ सनातनम्।

किमु तस्य सूक्ष्मत्वादिनिरतिशयत्वं वक्तव्यमित्येतद्दर्शयति-श्रुतिः। अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यदेतद्व्याख्यातं ब्रह्माव्ययं यद्धि शब्दादिमत्तद्व्येतीदन्त्वशब्दादिमत्त्वादव्ययं न व्येति न क्षीयतेऽत एव च नित्यं यद्धि व्येति तदनित्यमिदन्तु न द्रुतश्च नित्यमनाद्यविद्यमानमनादि कारणमस्य तदिदमनादि। यच्चादिमत्तत्कार्य्यत्वादनित्यं कारणे प्रलीयते। यथा पृथिव्यादि। इदन्तु सर्व्वकारणत्वादकार्य्यमकार्य्यत्वान्नित्यं न तस्य कारणमस्ति यस्मिंल्लीयेत तथाऽऽनन्त्यमविद्यमानोऽन्तो यस्य तदनन्तं यथा कदल्यादेः फलादिकार्य्योत्पादनेनाप्यनित्यत्वं दृष्टम्। न च तथाप्यन्तवत्त्वं ब्रह्मणोऽतोऽपि नित्यं महतो महत्त्वात्तद्बुद्ध्याख्यात्परं विलक्षणं नित्यविज्ञप्तिस्वरूपत्वात्सर्व्वसाक्षि हि सर्व्वभूतात्मत्वाद्ब्रह्म। उक्तं ह्येष सर्व्वेषु भूतेष्वित्यादि। ध्रुवञ्च कूटस्थं नित्यं न पृथिव्यादिवदापेक्षिकं नित्यत्वम्। तदेवम्भूतं ब्रह्मात्मानं निचाय्यावगम्य तमात्मानं मृत्युमुखान्मृत्युगोचरादविद्याकामकर्म्मलक्षणात्प्रमुच्यते वियुज्यते॥ १५॥

प्रस्तुतविज्ञानस्तुत्यर्थमाह श्रुतिः। नाचिकेतं नचिकेतसा प्राप्तं नाचिकेतं मृत्युना प्रोक्तं मृत्युप्रोक्तमिदमाख्यानं वल्लीत्रयलक्षणं सनातनं चिरन्तनं वैदिकत्वादुक्त्वा ब्राह्मणेभ्यः श्रुत्वा

सिद्ध्यतीत्याह। स्थूला तावदित्यादिना॥१४॥१५॥१६॥१७॥

उक्त्वा श्रुत्वा च मेधावी ब्रह्मलोके महीयते ॥ १६॥

य इमं परमं गुह्यं श्रावयेद्ब्रह्मसंसदि । प्रयतः श्राद्धकाले वा तदानन्त्याय कल्पते तदानन्त्याय कल्पत इति ॥ १७ ॥

इति प्रथमाध्याये तृतीया वल्ली ॥ ३ ॥

इति प्रथमोऽध्यायः समाप्तः ॥

पराञ्चि खानि व्यतृणत्स्वयम्भूस्तस्मात्पराङ्प-

---

ऽऽचार्येभ्यो मेधावी ब्रह्मैव लोको ब्रह्मलोकस्तस्मिन् ब्रह्मलोके महीयते आत्मभूत उपास्यो भवतीत्यर्थः ॥ १६ ॥

यः कश्चिदिमं ग्रन्थं परमं प्रकृष्टं गुह्यं गोप्यं श्रावयेद्ग्रन्थतोऽर्थतश्च ब्राह्मणानां संसदि ब्रह्मसंसदि प्रयतः शुचिर्भूत्वा श्राद्धकाले वा श्रावयेद्भुञ्जानम् । तच्छ्राद्धमस्यानन्त्यायानन्तफलाय कल्पते समर्थते । द्विर्वचनमध्यायपरिसमाप्त्यर्थम् ॥ १७ ॥

इति श्रीगोविन्दभगवत्पूज्यपादशिष्यपरमहंसपरिव्राजकाचार्यस्य श्रीशङ्करभगवतः कृतौ काठोपनिषद्भाष्ये प्रथमोऽध्यायः॥१॥

एष सर्वेषु भूतेषु गूढाऽऽत्मा न प्रकाशते । दृश्यते त्वग्र्यया बुद्ध्या इत्युक्तम् । कः पुनः प्रतिबन्धोऽग्र्याया बुद्धेर्येन तद्भावादात्मा न दृश्यत इति तद्दर्शनकारणप्रदर्शनार्था वल्ली आरभते ।

---

अनादिरविद्याप्रतिबन्धः प्रागुक्तोऽधुनाऽऽगन्तुकप्रतिबन्धदर्शनायोत्तरवल्ल्यारम्भ इति सम्बन्धमाह । एष सर्वेष्वित्यादिना॥

इन्द्रियाण्यन्तर्मुखानि स्युस्तदा तान्यात्मनिष्ठतयाऽस्तत्वमापुरत इन्द्रियाणि बहिर्मुखानि सृष्टानीति यत्तेषां हननमेव कृतमि-

श्यति नान्तरात्मन् । कश्चिद्धीरः प्रत्यगात्मानमैक्ष-

---

विज्ञाते हि श्रेयःप्रतिबन्धकारणे तदपनयनाय यत्न आरब्धुं शक्यते नान्यथेति ॥ पराञ्चि परागञ्चन्ति गच्छन्तीति खोपलक्षितानि श्रोत्रादीनीन्द्रियाणि खानीत्युच्यन्ते। तानि पराञ्च्येव शब्दादिविषयप्रकाशनाय प्रवर्त्तन्ते। यस्मादेवं स्वाभाविकानि तानि व्यतृणद्धिंसितवान्हननं कृतवानित्यर्थः। कोऽसौ। स्वयम्भूर्यःपरमेश्वरः स्वयमेव स्वतन्त्रो भवति सर्व्वदा न परतन्त्र इति। तस्मात्पराङ् प्रत्यग्रूपाननात्मभूतान् शब्दादीन् पश्यत्युपलभते। उपलभ्ध्वा नान्तरात्मन् नान्तरात्मानमित्यर्थः। एवं स्वभावेऽपि सति लोकस्य कश्चिन्नद्याः प्रतिश्रोतःप्रवर्त्तनमिव धीरो धीमान्विवेकी प्रत्यगात्मानं प्रत्यक् चासावात्मा चेति प्रत्यगात्मा प्रतीच्येवात्मशब्दो रूढ़ो लोके नान्यस्मिन् व्युत्पत्तिपक्षेऽपि तत्रैवात्मशब्दो वर्त्तते। यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह यच्चास्य सन्ततो भावस्तस्मादात्मेति कीर्त्त्यत इत्यात्मशब्दव्युत्पत्तिस्मरणात्। तं प्रत्यगात्मानं स्वस्वभावमैक्षदपश्यत्पश्यतीत्यर्थः। छन्दसि कालानियमात्। कथं पश्यतीत्युच्यते। आवृत्तचक्षुरावृत्तं व्यावृत्तं चक्षुःश्रोत्रादिकमिन्द्रियजातमशेषविषयाद्यस्य स आवृत्तचक्षुः स एवं संस्कृतः प्रत्यगात्मानं पश्यति। न हि बाह्यविषयालोचनपरत्वं प्रत्यगात्मेक्षणञ्चैकस्य सम्भवतीति। किमिच्छन् पुनरित्थं महता प्रयासेन स्वभावप्रवृत्तिनिरोधं

---

त्यर्थः। आप्लृ व्याप्ताविति धात्वर्थानुसारेण व्यापक आत्मशब्दार्थः॥ यद्यस्मादादत्ते संहरति स्वात्मन्येव सर्व्वमिति जगदुपादानं लभ्यते विषयानत्तीत्यात्मेति व्युत्पत्त्या स्वचैतन्याभासे-

दावृत्तचक्षुरमृतत्वमिच्छन् ॥ १ ॥

पराचः कामाननुयन्ति बालास्ते मृत्योर्यन्ति

---

ज्ञात्वा धीरः प्रत्यगात्मानं पश्यतीत्युच्यते । अमृतत्वममरणधर्मत्वं नित्यस्वभावतामिच्छन्नात्मन इत्यर्थः ॥ १ ॥

यत्तावत्स्वाभाविकं पराग्गेवानात्मदर्शनं तदात्मदर्शनस्य प्रतिबन्धकारणमविद्या तत्प्रतिकूलत्वाद्या च परागेवाविद्योपप्रदर्शितेषु दृष्टादृष्टेषु भोगेषु तृष्णा ताभ्यामविद्यातृष्णाभ्यां प्रतिबद्धात्मदर्शनाः पराचो वहिर्गतानेव कामान् काम्यान् विषयाननुयन्ति अनुगच्छन्ति बाला अल्पप्रज्ञास्ते तेन कारणेन मृत्योरविद्याकामकर्मसमुदायस्य यन्ति गच्छन्ति विततस्य विस्तीर्णस्य सर्व्वतो व्याप्तस्य पाशं पाश्यते बध्यते येन तं पाशं देहेन्द्रियादिसंयोगवियोगलक्षणमनवरतं जन्ममरणजरारोगाद्यनेकानर्थव्रातं प्रतिपद्यन्त इत्यर्थः । यत एवमथ तस्माद्धीरा विवेकिनः प्रत्यगात्मस्वरूपावस्थानलक्षणममृतत्वम् । देवाद्यमृतत्वं ह्यध्रुवमिदन्तु प्रत्यगात्मस्वरूपावस्थानलक्षणं ध्रुवम् । न कर्म्मणा वर्द्धते नो कनीयानिति श्रुतेः । तदेवम्भूतं कूटस्थमविचाल्यममृतत्वं विदित्वाऽध्रुवेषु सर्व्वपदार्थेष्वनित्येषु ब्राह्मणा इह संसारेऽन-

---

नोपलब्धृत्वमात्मशब्दार्थः । येन कारणेनास्यात्मनः सन्ततो निरन्तरो भावः । कल्पितस्याधिष्ठानसत्त्वामन्तरेण सत्ताभावाद्यथा रज्ज्वभ्यासे सर्पे रज्ज्वा सातत्यं तथा कल्पितं सर्व्वं येन स्वस्वरूपवत्स आत्मेत्यर्थः ॥ १ ॥

श्यति नान्तरात्मन् । कश्चिद्धीरः प्रत्यगात्मानमैक्ष-

---

विज्ञाते हि श्रेयःप्रतिबन्धकारणे तदपनयनाय यत्न आरब्धुं शक्यते नान्यथेति ॥ पराञ्चि परागञ्चन्ति गच्छन्तीति स्वोपलक्षितानि श्रोत्रादीनीन्द्रियाणि खानीत्युच्यन्ते । तानि पराञ्च्येव शब्दादिविषयप्रकाशनाय प्रवर्त्तन्ते । यस्मादेवं स्वाभाविकानि तानि व्यतृणद्धिंसितवान्हननं कृतवानित्यर्थः । कोऽसौ । स्वयम्भूर्यःपरमेश्वरः स्वयमेव स्वतन्त्रो भवति सर्वदा न परतन्त्र इति । तस्मात्पराङ्प्रत्यग्रूपाननात्मभूतान् शब्दादीन् पश्यत्युपलभते । उपलभ्ध्वा नान्तरात्मन् नान्तरात्मानमित्यर्थः । एवं स्वभावेऽपि सति लोकस्य कश्चिन्नद्याः प्रतिस्रोतःप्रवर्त्तनमिव धीरो धीमान्विवेकी प्रत्यगात्मानं प्रत्यक् चासावात्मा चेति प्रत्यगात्मा प्रतीच्ये वात्मशब्दो रूढो लोके नान्यस्मिन् व्युत्पत्तिपक्षेऽपि तत्रैवात्मशब्दो वर्त्तते । यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह यच्चास्य सन्ततो भावस्तस्मादात्मेति कीर्त्यत इत्यात्मशब्दव्युत्पत्तिस्मरणात् । तं प्रत्यगात्मानं स्वस्वभावमैक्षदपश्यत्पश्यतीत्यर्थः । छन्दसि कालानियमात् । कथं पश्यतीत्युच्यते । आवृत्तचक्षुरावृत्तं व्यावृत्तं चक्षुःश्रोत्रादिकमिन्द्रियजातमशेषविषयाद्यस्य स आवृत्तचक्षुः स एवं संस्कृतः प्रत्यगात्मानं पश्यति । न हि वाह्यविषयालोचनपरत्वं प्रत्यगात्मेक्षणञ्चैकस्य सम्भवतीति । किमिच्छन् पुनरित्थं महता प्रयासेन स्वभावप्रवृत्तिनिरोधं

---

त्यर्थः । आप्लृ व्याप्ताविति धात्वर्थानुसारेण व्यापक आत्मशब्दार्थः ॥ यद्यस्मादादत्ते संहरति स्वात्मन्येव सर्वमिति जगदुपादानं लभ्यते विषयानत्तीत्यात्मेति व्युत्पत्त्या स्वचैतन्याभासे-

दावृत्तचक्षुरमृतत्वमिच्छन् ॥ १ ॥

पराचः कामाननुयन्ति बालास्ते मृत्योर्यन्ति

---

ऋत्वा धीरः प्रत्यगात्मानं पश्यतीत्युच्यते । अमृतत्वममरणधर्म्मत्वं नित्यस्वभावतामिच्छन्नात्मन इत्यर्थः ॥ १ ॥

यस्तावत्स्वाभाविकं पराग्गेवानात्मदर्शनं तदात्मदर्शनस्य प्रतिबन्धकारणमविद्या तत्प्रतिकूलत्वाद्या च पराग्गेवाविद्योपप्रदर्शितेषु दृष्टादृष्टेषु भोगेषु तृष्णा ताभ्यामविद्यातृष्णाभ्यां प्रतिबद्धात्मदर्शनाः पराचो वहिर्गतानेव कामान् काम्यान् विषयाननुयन्ति अनुगच्छन्ति बाला अल्पप्रज्ञास्ते तेन कारणेन मृत्योरविद्याकामकर्म्मसमुदायस्य यन्ति गच्छन्ति विततस्य विस्तीर्णस्य सर्व्वतो व्याप्तस्य पाशं पाश्यते बध्यते येन तं पाशं देहेन्द्रियादिसंयोगवियोगलक्षणमनवरतं जन्ममरणजरारोगाद्यनेकानर्थव्रातं प्रतिपद्यन्त इत्यर्थः । यत एवमथ तस्माद्धीरा विवेकिनः प्रत्यगात्मस्वरूपावस्थानलक्षणममृतत्वम् । देवाद्यमृतत्वं ह्यध्रुवमिदन्तु प्रत्यगात्मस्वरूपावस्थानलक्षणं ध्रुवम् । न कर्म्मणा वर्द्धते नो कनीयानिति श्रुतेः । तदेवम्भूतं कूटस्थमविचाल्यममृतत्वं विदित्वाऽध्रुवेषु सर्व्वपदार्थेष्वनित्येषु ब्राह्मणा इह संसारेऽन-

---

नोपलब्धृत्वमात्मशब्दार्थः । येन कारणेनास्यात्मानः सन्ततो निरन्तरो भावः । कल्पितस्याधिष्ठानसत्त्वामन्तरेण सत्त्वाभावाद्यथा रज्ज्वभ्यासे सर्पे रज्ज्वा सातत्यं तथा कल्पितं सर्व्वं येन स्वस्वरूपवत्स आत्मेत्यर्थः ॥ १ ॥

य इमं मध्वदं वेद आत्मानं जीवमन्तिकात् । ईशानम्भूतभव्यस्य न ततो विजुगुप्सते । एतद्वै तत् ॥ ५ ॥

यः पूर्व्वन्तपसो जातमद्भ्यः पूर्वमजायत । गुहां प्रविश्य तिष्ठन्तं यो भूतेभिर्व्यपश्यत । एतद्वैतत् ॥ ६ ॥

किञ्च यः कश्चिदिमं मध्वदं कर्म्मफलभुजं जीवं प्राणादिकलापस्य धारयितारमात्मानं अन्तिकादन्तिके समीपे ईशानमीशितारं वेद विजानाति भूतभव्यस्य कालत्रयस्य ततस्तद्विज्ञानादूर्द्ध्वमात्मानं न विजुगुप्सते न गोपायितुमिच्छति अभयप्राप्तत्वात् । यावद्धि भयमध्यस्थोऽनित्यमात्मानं मन्यते तावद्गोपायितुमिच्छत्यात्मानम् । यदा तु नित्यमद्वैतमात्मानं विजानाति तदा किं कः कुतो वा गोपायितुमिच्छेदेतद्वैतदिति पूर्व्ववत् ॥ ५ ॥

यः प्रत्यगात्मेश्वरभावेन निर्द्दिष्टः स सर्व्वात्मेत्येतद्दर्शयति । यः कश्चिन्मुमुक्षुः पूर्वं प्रथमं तपसो ज्ञानादिलक्षणाद्ब्रह्मण इत्येतज्जातमुत्पन्नं हिरण्यगर्भम् । किमपेक्ष्य पूर्व्वमित्याह । अद्भ्यः पूर्वमप्सहितेभ्यः पञ्चभूतेभ्यो न केवलाभ्योऽद्भ्य इत्यभिप्रायः । अजायत उत्पन्नो यस्तं प्रथमजं देवादिशरीराण्युत्पाद्य सर्वप्राणिगुहां हृदयाकाशं प्रविश्य तिष्ठन्तं शब्दादीनुपलभमानं भूतेभिर्भूतैः कार्य्यकारणलक्षणैः सह तिष्ठन्तं यो व्यपश्यत यः पश्यतीत्यर्थः । य एवं पश्यति स एतदेव पश्यति यत्तत्प्रकृतं ब्रह्म ॥ ६ ॥

---

साऽज्जरतं कुण्डलं सुवर्णमेव भवति तद्ब्रह्मणो जातो हिरण्यगर्भोऽपि ब्रह्मात्मक एवेत्यर्थः ॥ ४ ॥ ५ ॥ ६ ॥

मृत्युमाप्नोति य इह नानेव पश्यति ॥ १० ॥

मनसैवेदमाप्तव्यन्नेह नानास्ति किञ्चन । मृत्योः स मृत्युङ्गच्छति य इह नानेव पश्यति ॥ ११ ॥

अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति ।

---

त्तथा न पश्येद्विज्ञानैकरसं नैरन्तर्य्येणाकाशवत्परिपूर्णं ब्रह्मैवाहमस्मीति पश्येदिति वाक्यार्थः ॥ १० ॥

प्रागेकत्वविज्ञानादाचार्य्यागमसंस्कृतेन मनसैवेदं ब्रह्मैकरसमाप्तव्यमात्मैव नान्यदस्तीत्याप्ते च नानात्वप्रत्युपस्थापिकाया अविद्याया निवृत्तत्वादिह ब्रह्मणि नाना नास्ति किञ्चन अणुमात्रमपि । यस्तु पुनरविद्यातिमिरदृष्टिं न मुञ्चति इह ब्रह्मणि नानेव पश्यति स मृत्योर्मृत्युं गच्छत्येव स्वल्पमपि भेदमध्यारोपयन्नित्यर्थः ॥ ११ ॥

पुनरपि तदेव प्रकृतं ब्रह्माह । अङ्गुष्ठमात्रोऽङ्गुष्ठपरिमाणम् । हृदयपुण्डरीकं तच्छिद्रवर्त्यन्तःकरणोपाधिरङ्गुष्ठमात्रोऽङ्गुष्ठमात्रवंशपर्व्वमध्यवर्त्यम्बरवत्पुरुषः पूर्णमनेन सर्व्वमिति मध्य आत्मनि शरीरे तिष्ठति यस्तमात्मानमीशानं भूत-

---

स्वप्ने नानात्वाभावेऽपि नानात्वमध्यारोप्य सत्यत्वाभिनिवेशेन यो व्यवहरति तथा जागरितेऽपि नानात्वमध्यारोप्य सत्यत्वाभिनिवेशेन यो व्यवहरति तस्य निन्दितत्वादेकरसं ब्रह्मैवास्मीति प्रतिपत्तव्यमित्यर्थः ॥ १० ॥

एकरसञ्चेद्ब्रह्म कथं ज्ञातृज्ञेयविभाग इत्याशङ्क्याद्यं प्रति कल्पिभेदेनेत्याह । प्रागेकत्वविज्ञानादिति ॥ अङ्गुष्ठपरिमाणं

ईशानो भूतभव्यस्य न ततो विजुगुप्सते । एतद्वै-
तत् ॥ १२ ॥

अङ्गुष्ठमात्रः पुरुषो ज्योतिरिवाधूमकः । ई-
शानो भूतभव्यस्य स एवाद्य स उ श्वः । एतद्वैतत्
॥ १३ ॥

यथोदकन्दुर्गे वृष्टम्पर्व्वतेषु विधावति एवं धर्म्मान्
पृथक् पश्यंस्तानेवानुविधावति ॥ १४ ॥

---

भवस्य विदित्वा न ततो विजुगुप्सते । एतद्वैतत्पूर्ब्बवत् ॥ १२ ॥

किञ्चाङ्गुष्ठमात्रः पुरुषो ज्योतिरिवाधूमकोऽधूमकमित्युक्तं ज्यो-
तिःपरत्वात् । यस्त्वेवं लक्षितो योगिभिर्हृदय ईशानो भूत-
भव्यस्य स एव नित्यः कूटस्थोऽद्येदानीं प्राणिषु वर्त्तमानः स उ
श्वोऽपि वर्त्तिष्यते नान्यस्तत्समोऽन्यश्च जनिष्यत इत्यर्थः ॥ १३ ॥

अनेन नायमस्तीति चैके इत्ययं पक्षो न्यायतः प्राप्तोऽपि
स्ववचनेन श्रुत्या प्रत्युक्तस्तथा क्षणभङ्गवादश्च । पुनरपि भेद-
दर्शनाय वादं ब्रह्मण आह । यथोदकं दुर्गे दुर्गमे देश उच्छ्रिते
वृष्टं सिक्तं पर्व्वतेषु पर्व्वतवत्सु निम्नप्रदेशेषु विधावति विकीर्णं
सद्विनश्यति एवंधर्म्मानात्मनो भिन्नान् पृथक् पश्यन् पृथगेव प्रति
शरीरं पश्यंस्तानेव शरीरभेदानुवार्त्तनोऽनुविधावति शरीरभेद-
मेव पुनः पुनः प्रतिपद्यत इत्यर्थः ॥ १४ ॥

---

जीवमनूद्य ब्रह्मभावविधानाद्विधीयमानविरोधादङ्गुष्ठमात्रस्या-
विवक्षितत्वाद्ब्रह्मपरमेव वाक्यमित्याह । पुनरपि तदेवेति
॥ ११ ॥ १२ ॥ १३ ॥

यथोदकं शुद्धे शुद्धमासिक्तन्तादृगेव भवति ।
एवंमुनेर्विजानत आत्मा भवति गौतम ॥ १५ ॥
इति चतुर्थी वल्ली समाप्ता ॥ ४ ॥
पुरमेकादशद्वारमजस्यावक्रचेतसः । अनुष्ठाय

---

यस्य पुनर्विद्यावतो विध्वस्तोपाधिकृतभेददर्शनस्य विशुद्धवि-ज्ञानघनैकरसमद्वयमात्मानं पश्यतो विजानतो मुनेर्मननशीलस्यात्मस्वरूपं कथं सम्भवतीत्युच्यते। यथोदकं शुद्धे प्रसन्ने शुद्धं प्रसन्नमासिक्तं प्रक्षिप्तमेकरसमेव नान्यथा तादृगेव भवत्यात्माप्येवमेवात्मा भवत्येकत्वं विजानतो मुनेर्मननशीलस्य हे गौतम। तस्मात्कुतार्किकभेददृष्टिं नास्तिककुदृष्टिञ्चोज्झित्वा मातृपितृसहस्रेभ्योऽपि हितैषिणा वेदेनोपदिष्टमात्मैकत्वदर्शनं शान्तदर्पैरादरणीयमित्यर्थः ॥ १५ ॥

इति कठवल्ल्यां चतुर्थी वल्ली समाप्ता ॥ ४ ॥

पुनरपि प्रकारान्तरेण ब्रह्मतत्त्वनिर्द्धारणार्थोऽयमारम्भः । दुर्विज्ञेयत्वाद्ब्रह्मणः पुरं पुरमिव पुरं द्वारं द्वारपालाधिष्ठात्राद्यनेकपुरोपकरणसम्पत्तिदर्शनाच्छरीरं पुरञ्च सोपकरणं स्वात्मना संहतं स्वतन्त्रस्वाम्यर्थं दृष्टम् । तथेदं पुरसामान्यादनेकोपकरणसंहतं शरीरं स्वात्मना संहतराजस्थानीमस्वाम्यर्थं भवितुमर्हति । तच्चेदं शरीराख्यं पुरमेकादशद्वारमेकादशद्वारान्यस्य सप्तशीर्षण्यानि नाभ्या सहार्वाञ्चि त्रीणि शिरस्येकं

---

पौनरुक्त्यं परिहरन् सम्बन्धमाह। पुनरपीति॥ भूयोऽपि पथ्यं वक्तव्यमिति न्यायेनोपायान्तरेण ब्रह्म ज्ञाप्यते ततोपाया एव भिद्यन्ते। नोपेयस्य भेदोऽस्तीति पुरेणासंहतत्वं स्वामिनः

न शोचति विमुक्तश्च विमुच्यते। एतद्वैतत् ॥ १ ॥
हꣳसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदति-

तैरेकादशद्वारं पुरम्। कस्याजस्य जन्मादिविक्रियारहितस्या-त्मनो राजस्थानीयस्य पुरधर्म्मविलक्षणस्यावक्रचेतसः। अवक्रम-कुटिलमादित्यप्रकाशवन्नित्यमेवावस्थितमेकरूपं चेतो विज्ञानम-स्येत्यवक्रचेतास्तस्यावक्रचेतसो राजस्थानीयस्य ब्रह्मणः। यस्येदं पुरं तं परमेश्वरं पुरस्वामिनमनुष्ठाय ध्यात्वा ध्यानं हि तस्या-नुष्ठानं सम्यग्विज्ञानपूर्व्वकं तं सर्व्वैषणाविनिर्म्मुक्तः सन् समं सर्व्व-भूतस्थं ध्यात्वा न शोचति। तद्विज्ञानादभयप्राप्तेः शोकावस-राभावात्। कुत इहैवाविद्याकृतकामकर्म्मबन्धनैर्विमुक्तो भ-वति। विमुक्तश्च सन्विमुच्यते पुनः शरीरं न गृह्णातीत्यर्थः ॥१॥

स तु नैकशरीरपुरवर्त्त्येवात्मा किन्तर्हि सर्व्वपुरवर्त्ती कथं हंसः हन्ति गच्छतीति। शुचिषच्छुचौ दिव्यादित्यात्मना सीद-तीति। वसुर्वासयति सर्व्वानिति। वाय्वात्मना अन्तरिक्षे सीदतीत्यन्तरिक्षसत्। होता अग्निरग्निर्वै होतेति श्रुतेः। वेद्यां पृथिव्यां सीदतीति वेदिषत्। इयं वेदिः परोऽन्तः पृथिव्या इत्यादिमन्त्रवर्णात्। अतिथिः सोमः सन्द्रोणे कलशे सीदतीति

पुरोपचयापचयाभ्यामुपचयापचयराहित्यं तत्सत्त्वाप्रतीतिमन्त-रेण सत्ताप्रतीतिमत्त्वं स्वातन्त्र्यम् ॥ १ ॥

या यज्ञे प्रसिद्धा वेदिः पृथिव्याः परोऽन्तः परस्वभाव इति वेद्याः पृथिवीस्वभावत्वसङ्कीर्त्तनात्पृथिवी वेदिशब्दवाच्या भव-तीत्यर्थः। असौ वाऽऽदित्यो हंसः शुचिषदि ब्राह्मणे नादित्यो मन्त्रार्थतया व्याख्यातः कथं तद्विरुद्धमिदं व्याख्यानमित्याश-

थिर्दुरोणसत् । नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतम्बृहत् ॥ २ ॥

ऊर्द्ध्वम्प्राणमुन्नयत्यपानं प्रत्यगस्यति । मध्ये

---

दुरोणसत् । ब्रह्मणोऽतिथिरूपेण वा दुरोणेषु गृहेषु सीदतीति। नृषत् नृषु मनुष्येषु सीदतीति नृषत् । वरेषु देवेषु सीदतीति वरसत् । ऋतसदृतं सत्यं यज्ञो वा तस्मिन् सीदतीति । व्योमसत् व्योम्न्याकाशे सीदतीति व्योमसत् । अब्जा अप्सु शङ्खशुक्तिमकरादिरूपेण जायत इति । गोजाः गवि पृथिव्यां व्रीहियवादिरूपेण जायत इति । ऋतजाः यज्ञाङ्गरूपेण जायत इति । अद्रिजाः पर्व्वतेभ्यो नद्यादिरूपेण जायत इति । सर्व्वात्मापि सन्नृतमवितथस्वभाव एव बृहन्महान् सर्व्वकारणत्वात् । यदाप्यादित्य एव मन्त्रेणोच्यते तदाप्यात्मस्वरूपवत्त्वमादित्यस्याङ्गीकृतत्वाद्ब्रह्मणो व्याख्यानेऽप्यविरोधः । सर्व्वथामेक एवात्मा जगतो नात्मभेद इति मन्त्रार्थः ॥ २ ॥

आत्मनः स्वरूपाधिगमे लिङ्गमुच्यते । ऊर्द्ध्वं हृदयात्प्राणं प्राणवृत्तिं वायुमुन्नयति ऊर्द्ध्वं गमयति । तथाऽपानं प्रत्यगधोऽस्यति क्षिपति । य इति वाक्यशेषः । तं मध्ये हृदयपुण्डरीकाकाशे आसीनं बुद्धावभिव्यक्तविज्ञानप्रकाशनं वामनं सम्भजनीयं

---

ङ्क-ाह । यदाप्यादित्य एवेति । सूर्य्य आत्मा जगतस्तस्थुषश्चेति मन्त्रान्मण्डलोपलक्षितस्य चिद्धातोरिष्यत एव सर्व्वात्मत्वमित्यर्थः ॥ २ ॥

येयं प्रेते विचिकित्सा मनुष्य इति याऽपूर्व्वविचिकित्सा प्रश्नभूतस्तेनोद्भाविता सापि निर्मूलेन्येतद्दर्शयितुं देहव्यतिरिक्ता-

वामनमासीनम्विश्वे देवा उपासते ॥ ३ ॥

अस्य विस्रंसमानस्य शरीरस्थस्य देहिनः। देहा-
द्विमुच्यमानस्य किमत्र परिशिष्यते। एतद्वैतत् ॥४॥

न प्राणेन नापानेन मर्त्यो जीवति कश्चन।

---

विश्वे सर्वे देवाश्चक्षुरादयः प्राणा रूपादिविज्ञानं बलिमुपाह-
रन्तो विश इव राजानमुपासते तादर्थ्येनानुपरतव्यापारा भ-
वन्तीत्यर्थः ॥ ३ ॥

यदर्था यत्प्रयुक्ताश्च सर्वे वायुकरणव्यापाराः सोऽन्यः
सिद्ध इति वाक्यार्थः। किञ्चास्य शरीरस्थस्यात्मनो विस्रंसमान-
स्यावस्रंसमानस्य भ्रंश्यमानस्य देहिनो देहवतो विस्रंसन-
शब्दार्थमाह देहाद्विमुच्यमानस्येति। किमत्र परिशिष्यते
प्राणादिकलापे न किञ्चन परिशिष्यतेऽत्र देहे पुरस्वामिनि
विद्रवण इव पुरवासिनं यस्यात्मनोऽपगमे क्षणमात्रात्कार्य्यकार-
णकलापं सर्व्वमिदं हतबलं विध्वस्तं भवति नष्टं भवति सोऽन्यः
सिद्धः। स्यान्मतं प्राणापानाद्यपगमादेवेदं विध्वस्तं भवति न
तु व्यतिरिक्तात्मापगमात्प्राणादिभिरेवेह मर्त्त्या जीवन्तीति ॥४॥

किञ्च न प्राणेन नापानेन चक्षुरादिना वा मर्त्त्यो मनुष्यो
देहवान् कश्चन जीवति न कोऽपि जीवति। न ह्येषां परार्थानां

---

त्मास्तित्वं साधयति। आत्मनः स्वरूपाधिगम इत्यादिना ॥ सर्वे-
प्राणकरव्यापारास्चेतनार्थास्तत्प्रयुक्ता भवितुमर्हन्ति जडचेष्ट-
त्वाद्रथचेष्टावदित्यर्थः। शरीरं चेतनशेषं तद्विगमे भोगानर्हत्वा-
द्राजपुरवदित्यर्थः। किञ्चास्येत्यन्यथासिद्धिं शङ्कते। स्यान्मत-
मिति ॥ ३ ॥ ४ ॥

इतरेण तु जीवन्ति यस्मिन्नेतावुपाश्रितौ ॥ ५ ॥
हन्त त इदम्प्रवक्ष्यामि गुह्यम्ब्रह्म सनातनम् ।
यथा च मरणं प्राप्य आत्मा भवति गौतम ॥ ६ ॥
योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः । स्थाणु-

---

संहत्यकारित्वाज्जीवनहेतुत्वमुपपद्यते । स्वार्थेन संहतेन परेण केनचिदप्रयुक्तं संहतानामवस्थानं न दृष्टम् । यथा गृहादीनां लोके तथा प्राणादीनामपि संहतत्वाद्भवितुमर्हत्यत इतरेणैव संहतप्राणादिविलक्षणेन तु सर्वे संहताः सन्तो जीवन्ति प्राणान्धारयन्ति । यस्मिन् संहननविलक्षणे आत्मनि सति परस्मिन्नेतौ प्राणापानौ चक्षुरादिभिः संहतावुपाश्रितौ । यस्यासंहतस्यार्थे प्राणापानादिः सर्वव्यापारं कुर्वन् वर्त्तते संहतः सन् स ततो ऽन्यः सिद्ध इत्यभिप्रायः ॥ ५ ॥

हन्तेदानीं पुनरपि ते तुभ्यमिदं गुह्यं गोप्यं ब्रह्म सनातनं चिरन्तनं प्रवक्ष्यामि ; यद्विज्ञानात्सर्वसंसारोपरमो भवति अविज्ञानाच्च यस्य मरणं प्राप्य यथा चात्मा भवति यथा संसरति तथा शृणु हे गौतम ॥ ६ ॥

योनिं योनिद्वारं शुक्रबीजसमन्विताः सन्तोऽन्ये केचिदविद्यावन्तो मूढाः प्रपद्यन्ते प्रविशन्ति शरीरत्वाय शरीरग्रहणार्थं

---

ननु जीव प्राणधारण इति धातुस्मरणाच्छरीरस्य जीवनं नाम प्राणधारणं प्राणसंयोगस्य प्राणधारणं कुण्डे दधिधारणवदत्र च प्राणस्यैव हेतुत्वं संयोगाश्रयत्वात् कथमुच्यते । जीवनहेतुत्वं प्राणादीनां न सम्भवतीति तत्राह । स्वार्थेनासंहतेनेति ॥ कादाचित्कस्य प्राणशरीरसंयोगस्य स्वभावतोऽनुपपत्तेः सङ्घातस्य

मन्येऽनुसंयन्ति यथा कर्म यथा श्रुतम् ॥ ७ ॥

य एष सुप्तेषु जागर्त्ति कामं कामं पुरुषो निर्मिमाणः । तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते ॥ तस्मिँल्लोकाः श्रिताः सर्वे तदु नात्येति कश्चन ॥ एतद्वैतत् ॥ ८ ॥

---

देहिनो देहवन्तः । स्थाणुं स्थावरभावमन्येऽत्यन्ताधमा मरणं प्राप्यानुसंयन्ति अनुगच्छन्ति यथा कर्म । यद्यस्य कर्म तद्यथा कर्म यैर्यादृशं कर्मेह जन्मनि कृतं तद्वशेनेत्येतत् । तथा यथाश्रुतं यादृशञ्च विज्ञानमुपार्जितं तदनुरूपमेव शरीरं प्रतिपद्यन्त इत्यर्थः ॥ ७ ॥

यथा प्रज्ञं हि सम्भवा इतिश्रुत्यन्तराद्यत्प्रतिज्ञातं गुह्यं ब्रह्म तत् प्रवक्ष्यामीति तदाह । य एष सुप्तेषु प्राणादिषु जागर्त्ति न स्वपिति । कथम् । कामं कामं तं तमभिप्रेतं स्त्र्याद्यर्थमविद्यया निर्मिमाणो निष्पादयन् जागर्त्ति पुरुषः । तदेव शुक्रं शुभ्रं शुद्धं तद्ब्रह्म नान्यद्गुह्यं ब्रह्मास्ति । तदेवामृतमविनाश्युच्यते सर्वशास्त्रेषु । किं च पृथिव्यादयो लोका-

---

च लोके परप्रयुक्तस्यैव दर्शनाद्भवितव्यमन्येन सङ्घातप्रयोजकेनेत्यर्थः । येऽयं प्रेत इति पृष्टः परलोकास्तित्वेऽपि सन्देह आसीत् । विशेषतस्तन्निवृत्त्यर्थमुच्यत इत्याह । इदानीमिति ॥ ५ ॥ ॥ ६ ॥ ७ ॥

जननमरणकरणानां प्रति नियमादयुगपत्प्रवृत्तेश्च पुरुषबहुत्वं सिद्धम् । त्रैगुण्यविपर्य्ययाच्चेति नानात्मानो व्यवस्थिता इत्यनेकतार्किकबुद्धिविरोधात् सर्वपुरवर्त्त्येक एवात्मेत्यस्य न चित्त-

अग्निर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव । एकस्तथा सर्व्वभूतान्तरात्मा रूपं रूपं प्रतिरूपो बहिश्च ॥ ९ ॥

वायुर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव । एकस्तथा सर्व्वभूतान्तरात्मा रूपं रूपं प्रतिरूपो बहिश्च ॥ १० ॥

---

तस्मिन्नेव सर्वे ब्रह्मण्याश्रिताः सर्व्वलोककारणत्वात्तस्य । तदु नात्येति कश्चनेत्यादि पूर्व्ववदेव ॥ ८ ॥

अनेकतार्किकबुद्धिचालितान्तःकरणानां प्रमाणोपपन्नमप्यात्मैकत्वविज्ञानमसकृदुच्यमानमप्यनृजुबुद्धीनां ब्राह्मणानां चेतसि नाधीयत इति तत्प्रतिपादन आदरवती श्रुतिः पुनः पुनराह । अग्निर्यथैक एव प्रकाशात्मा सन् भुवनं भवन्त्यस्मिन् भूतानीति भुवनमयं लोकस्तमिमं प्रविष्टोऽनुप्रविष्टः । रूपं रूपं प्रति दार्व्वादिदाह्यभेदं प्रतीत्यर्थः । प्रतिरूपस्तत्र तत्र प्रतिरूपवान् दाह्यभेदेन बहुविधो बभूव एक एव । तथा सर्व्वभूतान्तरात्मा रूपं रूपं सर्व्वेषां भूतानामभ्यन्तर आत्मा अतिसूक्ष्मत्वाद्दार्व्वादिष्विव सर्व्वदेहम्प्रति प्रविष्टत्वात्प्रतिरूपो बभूव बहिश्च स्वेनाविकृतेन रूपेणाकाशवत् ॥ ९ ॥

तथाऽन्यो दृष्टान्तः । वायुर्यथैक इत्यादि । प्राणात्मना देहेष्वनुप्रविष्टो रूपं रूपं प्रतिरूपो बभूवेति समानम् ॥ १० ॥

---

स्थैर्य्यं सम्भवतीत्याशङ्क्यौपाधिकभेदसाधने सिद्धसाधनं स्वाभाविकभेदसाधने चानैकान्तिकत्वं दर्शयितुं प्रक्रमत इत्याह । अनेकतार्किकेत्यादिना ॥ ८ ॥ ९ ॥ १० ॥

**सूर्य्यो यथा सर्व्वलोकस्य चक्षुर्न लिप्यते चाक्षुषै-र्वाह्यदोषैः । एकस्तथा सर्व्वभूतान्तरात्मा न लि-**

---

एकस्य सर्व्वात्मकत्वे संसारदुःखित्वं परस्यैव तदिति प्राप्तम् अत इदमुच्यते । सूर्य्यो यथा चक्षुष आलोकेनोपकारं कुर्व्वन् मूत्रपुरीषाद्यशुचिप्रकाशनेन तद्दर्शिनः सर्व्वलोकस्य चक्षुरपि सन्न लिप्यते चाक्षुषैरशुच्यादिदर्शननिमित्तैरध्यात्मिकैः पापदोषैर्वा-ह्यैश्चाशुच्यादिसंसर्गदोषैः । एको वाह्यः । तथा सर्व्वभूतान्त-रात्मा न लिप्यते लोकदुःखेन । लोको ह्यविद्यया स्वात्मन्यध्य-स्तया कामकर्म्मोद्भवं दुःखमनुभवति न तु सा परमार्थतः स्वा-त्मनि । यथा रज्जुशुक्तिकोषरगगनेषु सर्परजतोदककमलानि न रज्ज्वादीनां स्वतो रूपाणि । संसर्गिणि विपरीतबुद्ध्या सनि-मित्तत्वात्तद्दोषवद्विभाव्यन्ते । न तद्दोषैस्तेषां लेपो विपरीतबुद्ध्य-ध्यासवाह्या हि ते । तथात्मनि सर्व्वो लोकः क्रियाकारकफलात्मकं विज्ञानं सर्पादिस्थानीयं विपरीतमध्यस्य तन्निमित्तं जन्मजरा-मरणादिदुःखमनुभवति नत्वात्मा सर्व्वलोकात्मापि सन्विपरीता-

---

प्रतिरूपोपाधिसादृश्यचतुष्कोणत्वादिधर्म्मके हि दारुणि रूपो वह्निरपि लक्ष्यत इत्यर्थः । परमात्मा दुःखी स्याद्दुःखा-त्मत्वाल्लोकवदित्याह । एकस्य सर्व्वात्मकत्वमिति ॥ अविद्यायाः प्रतिविम्बतश्चिद्धातुरज्ञो भ्रान्तो भवति । भ्रान्तस्स कामादिदो-षप्रयुक्तः कर्म्म कुरुते तन्निमित्तं च दुःखं स्वात्मन्यध्यस्यति । परमात्मा तु निरविद्यत्वाद्दुःखसाधनशून्यत्वान्न दुःखी ततो न प्रयोजको हेतुरित्याह । लोको ह्यविद्ययेति ॥ स्वरूपेण स्व-भावविषयत्वं विपरीतबुद्ध्याध्यासवाह्यत्वं रज्ज्वादीनां तथा चैत-

प्यते लोकदुःखेन बाह्यः ॥ ११ ॥

एको वशी सर्व्वभूतान्तरात्मा एकं रूपम्बहुधा यः करोति । तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां सुखं शाश्वतन्नेतरेषाम् ॥ १२ ॥

---

ध्यारोपनिमित्तैर्न लिप्यते लोकदुःखेन बाह्यो बहिः कुतो बाह्यो रज्ज्वादिवदेव । विपरीतब्रह्माध्यासबाह्यो हि सः ॥ ११ ॥

किञ्च स हि परमेश्वरः सर्व्वगतः स्वतन्त्र एको न तत्समोऽभ्यधिको वाऽन्योऽस्ति । वशी सर्व्वं ह्यस्य जगद्वशे वर्त्तते । कुतः सर्व्वभूतान्तरात्मा । यत एकमेव सदैकरसमात्मानं विशुद्धविज्ञानरूपं नामरूपाद्यशुद्धोपाधिभेदवशेन बहुधा बहुप्रकारेण यः करोति स्वात्मसत्तामात्रेणाचिन्त्यशक्तित्वात् । तमात्मस्थं स्वशरीरहृदयाकाशे बुद्धौ चैतन्याकारेणाभिव्यक्तमित्येतत् । न हि शरीरस्याधारत्वमात्मनः । आकाशवदमूर्त्तत्वात् । आदर्शस्थमुखमिति यद्वत् । तमेतमीश्वरमात्मानं ये निवृत्तबाह्यवृत्तयोऽनुपश्यन्ति आचार्य्यागमोपदेशमनु साक्षादनुभवन्ति धीरा विवेकिनस्तेषां परमेश्वरभूतानां शाश्वतं नित्यं सुखमात्मानन्दलक्षणं भवति नेतरेषां बाह्यासक्तबुद्धीनामविवेकिनां स्वात्मभूतमप्यविद्याव्यवधानात् ॥ १२ ॥

मनु

---

न्यस्योपाधिस्थरूपेणाध्यासाश्रयत्वेऽपि निरुपाधिकबिम्बकल्पब्रह्मरूपेणाध्यासानाश्रयत्वात्तद्दुःखित्वप्राप्तिरित्यर्थः ॥ ११ ॥

परोत्कर्षदर्शनं पारतन्त्र्यं च स्वस्य हीनत्वं दुःखकारणं प्रसिद्धं तदभावान्न परमात्मा दुःखी ततस्तत्प्राप्तिः परः पुरुषार्थो भविष्यतीत्याह । किञ्च स हीत्यादिना ॥ १२ ॥

नित्योऽनित्यानाञ्चेतनानामेको बहूनां यो विद-धाति कामान्। तमात्मस्थं येऽनुपश्यन्ति धीरा-स्तेषां शान्तिः शाश्वती नेतरेषाम्॥ १३॥

---

किञ्च नित्योऽविनाशी अनित्यानामविनाशिनाम्। चेतनश्चेतनानां चेतयितॄणां ब्रह्मादीनां प्राणिनामग्निनिमित्तमिव दाहकत्वमनग्नीनामुदकादीनामात्मचैतन्यनिमित्तमेव चेतयितृत्वमन्येषाम्। किञ्च स सर्व्वेश्वरः सर्व्वज्ञः कामिनां संसारिणां कर्म्मानुरूपं कामान् कर्म्मफलानि स्वानुग्रहनिमित्तांश्च कामान् य एको बहूनामनेकेषामनायासेन विदधाति ददाति प्रयच्छतीत्येतत्तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां शान्तिरुपरतिः शाश्वती नित्या स्वात्मभूतैव स्यान्नेतरेषामनेवंविधानाम्॥ १३॥

---

इदानीं परमात्मन्युपपत्तिप्रदर्शनार्थमाह। किञ्च नित्य इति॥ सूर्य्याचन्द्रमसौ धाता यथा पूर्व्वमकल्पयदित्यादिश्रुतेरकृतविप्रणाशप्रसङ्गपरिहाराच्च कल्पान्तरीयभावानां प्रलीनानां कल्पान्तरे सजातीयरूपेणोत्पादः प्रतीयते स तदा स्याद्यदि विनाशिनां भावानां शक्तिशेषो लयः स्यात्। प्रलये विनश्यत्सर्वं यत्र शक्ति-[illegible]ो विलीयते सोऽभ्युपगन्तव्य इत्यर्थः। बुद्धिमतामपि ब्रह्मेन्द्रादीनां परमानन्दाभिमुख्यं हित्वा या वहिर्म्मुखा चेतनोपलभ्यते सापि नियन्तारं गमयतीत्याह। चेतनश्चेतनानामिति॥ ब्रह्मादिशब्दवाच्यानां सङ्घातानां वा चेतयितृत्वं यच्चैतन्यनिमित्तं सोऽस्ति पर आत्मेत्यर्थः। विमतं कर्म्मफलं तत्स्वरूपाद्यभिज्ञेन दीयमानं व्यवहितफलत्वात् सेवाफलवदित्याह। किञ्च स इति॥ १३॥

नित्योऽनित्यानाञ्चेतनानामेको बहूनां यो विद-
धाति कामान् । तमात्मस्थं येऽनुपश्यन्ति धीरा-
स्तेषां शान्तिः शाश्वती नेतरेषाम् ॥ १३ ॥

---

किञ्च नित्योऽविनाशी अनित्यानामविनाशिनाम् । चेतनश्चेतनानां
चेतयितॄणां ब्रह्मादीनां प्राणिनामग्निनिमित्तमिव दाहकत्वमन-
ग्नीनामुदकादीनामात्मचैतन्यनिमित्तमेव चेतयितृत्वमन्येषाम् ।
किञ्च स सर्व्वेश्वरः सर्व्वज्ञः कामिनां संसारिणां कर्म्मानुरूपं
कामान् कर्म्मफलानि स्वानुग्रहनिमित्तांश्च कामान् य एको
बहूनामनेकेषामनायासेन विदधाति ददाति प्रयच्छतीत्येतत्त-
मात्मस्थं येऽनुपश्यन्ति धीरास्तेषां शान्तिरुपरतिः शाश्वती नित्या
स्वात्मभूतैव स्यान्नेतरेषामनेवंविधानाम् ॥ १३ ॥

---

इदानीं परमात्मन्युपपत्तिप्रदर्शनार्थमाह । किञ्च नित्य इति॥
सूर्य्य न्द्रमसौ धाता यथा पूर्व्वमकल्पयदित्यादिश्रुतेरज्ञतविप्रणा-
शप्र रहाराश्च कल्पान्तरीयभावानां प्रलीनानां कल्पान्तरे
सव स्वभ णोत्पादः प्रतीयते स तदा स्याद्यदि विनाशिनां
यस्मै चानो लयः स्यात् । प्रलये विनश्यत्सर्वं यत्र शक्ति-
दर्शयति॥ अभ्युपगन्तव्य इत्यर्थः । बुद्धिमतामपि ब्रह्मेन्द्रा-
चिकीर्षितं प्रतिस्थं हित्वा या वहिर्म्मुखा चेतनोपल-
प्राणिनां कामकलु यतीत्याह । चेतनश्चेतनानामिति ॥
ष्टस्याधिकारिणो दुर्न्नि नानां वा चेतयितृत्वं यच्चैतन्यनिमित्तं
तेरुपनिषज्जन्यविद्याया तं कर्म्मफलं तत्स्वरूपाद्यभिज्ञेन
ाफलवदित्याह । किञ्च स इति

॥ १३ ॥

तदेतदिति मन्यन्तेऽनिर्द्देश्यम्परमं सुखम् । कथन्नु तद्विजानीयां किमु भाति विभाति वा ॥ १४ ॥

न तत्र सूर्य्यो भाति न चन्द्रतारकन्नेमा विद्युतो भान्ति कुतोऽयमग्निः । तमेव भान्तमनुभाति स-

---

यत्तदात्मविज्ञानं सुखमनिर्द्देश्यं निर्द्देष्टुमशक्यं परमं प्रकृष्टं प्राकृतपुरुषवाङ्मनसयोरगोचरमपि सन्निवृत्तैषणा ये ब्राह्मणास्ते तदेतत्प्रत्यक्षमेवेति मन्यन्ते । कथन्नु केन प्रकारेण तत्सुखमहं विजानीयाम् । इदमित्यात्मबुद्धिविषयमापादयेयम् । यथा निवृत्तैषणा यतयः । किमु तद्भाति दीप्यते प्रकाशात्मकं तद्यतोऽस्मद्बुद्धिगोचरत्वेन विभाति विस्पष्टं दृश्यते किंवा नेति ॥ १४ ॥

तत्रोत्तरमिदं भाति च विभाति चेति । कथं नु तत्र तस्मिन् स्वात्मभूते ब्रह्मणि सर्व्वावभासकोऽपि सूर्य्यो भाति तद्ब्रह्म न प्रकाशयतीत्यर्थः । तथा न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमस्मद्दृष्टिगोचरोऽग्निः । किं बहुना यदिदमादित्यादिकं सर्व्वं भाति तत्तमेव परमेश्वरं भान्तं दीप्यमानमनुभात्यनुदीप्यते । यथा ज्वलोल्मुकाद्यग्निसंयोगादग्निं दहन्तमनु दहति न स्वतस्तद्वत्तस्यैव भासा दीप्त्या सर्व्वमिदं सूर्य्यादि विभाति । यत एवं तदेव ब्रह्म भाति च विभाति च कार्य्यं गतेन विविधेन भासा तस्य ब्रह्मणो भारूपत्वं स्वतोऽवगम्यते । न हि

---

विद्वदनुभवोऽपि परमानन्दे प्रमाणमित्याह । यत्तदात्मविज्ञानमिति ॥ तस्मादसम्भाविततया न जिज्ञासितव्यं परमा-

र्व्वन्तस्य भासा सर्व्वमिदं विभाति ॥ १५ ॥

इति पञ्चमी वल्ली समाप्ता ॥ ५ ॥

ऊर्द्ध्वमूलोऽवाक्शाख एषोऽश्वत्थः सनातनः ।

---

स्वतो विद्यमानं भासनमन्यस्य कर्त्तुं शक्यम् । घटादीनामन्याव-
भासकत्वादर्शनाद्भारूपाणामादित्यादीनां तद्दर्शनात् ॥ १५ ॥

इति कठवल्लीभाष्ये पञ्चमी वल्ली समाप्ता ॥ ५ ॥

इति द्वितीयोऽध्यायः ॥ २ ॥

तूलावधारणेनैव मूलावधारणं वृक्षस्य क्रियते लोके यथैवं
संसारकार्य्यवृक्षावधारणेन तन्मूलस्य ब्रह्मणः स्वरूपावदिधार-
विषया इयं षष्ठी वल्ली आरभ्यते । ऊर्द्ध्वमूलः ऊर्द्ध्वं मूलं यत्त-
द्विष्णोः परमम्पदमस्येति सोऽयमव्यक्तादिस्थावरान्तः संसारवृक्ष
ऊर्द्ध्वमूलः । वृश्चनाज्जन्ममरणजराशोकाद्यनेकानर्थात्मकः प्रति-
क्षणमन्यथा स्वभावो मायामरीच्युदकगन्धर्व्वनगरादिवद्दृष्टनष्टस्व-
रूपत्वादवसाने च वृक्षवदभावात्मकः कदलीस्तम्भवन्निःसारो नै-
कशतपाषण्डबुद्धिविकल्पास्पदः तत्त्वविजिज्ञासुभिरनिर्धारितेदं-
तत्त्वो वेदान्तनिर्द्धारितपरब्रह्ममूलसारोऽविद्याकामकर्म्माव्यक्त-

---

त्मदर्शनं किन्तु श्रद्धाधीनतया विचारयितव्यमेवेत्याह । कथं
न्विति ॥ १४ ॥ १५ ॥ इति पञ्चमी वल्ली समाप्ता ॥ ५ ॥

शाल्मल्यादितूलदर्शनेनादृष्टमपि वृक्षमूलं यथाऽस्तीत्यवधार्य्यते
तद्वददृष्टस्यापि ब्रह्मणोऽवधारणाय प्रक्रमत इत्याह । तूलाव-
धारणेनेति ॥ वृक्षशब्दस्य प्रवृत्तिनिमित्तमाह । वृश्चनादिति ॥
श्वो वृश्चूच्छेदने अस्य धातोः सप्रत्ययान्तस्य रूपं वृक्षइति ॥

तदेव शुक्रन्तद्ब्रह्म तदेवामृतमुच्यते । तस्मिँल्लोकाः

वीजप्रभवः परब्रह्मविज्ञानक्रियाशक्तिद्वयात्मकहिरण्यगर्भाङ्कुरः सर्व्वप्राणिलिङ्गभेदस्कन्धस्तृष्णाजलाशयसेकोद्भूतदर्पं बुद्धीन्द्रियाविषयप्रवालाङ्कुरः श्रुतिस्मृतिन्यायविद्योपदेशपलाशः यज्ञदानतपश्चाद्यनेकक्रियासुपुष्पः सुखदुःखवेदनानेकरसप्राण्युपजीव्यानन्तफलस्तत्तृष्णासलिलावसेकप्ररूढ़जडीकृतदृढबद्धमूलः सत्यनामादिसप्तलोकब्रह्मादिभूतपक्षिकृतनीडः प्राणिसुखदुःखोद्भूतहर्षशोकजातनृत्यगीतवादित्रक्ष्वेलितास्फोटितहसिताक्रुष्टरुदितहाहामुञ्चमुञ्चेत्याद्यनेकशब्दकृततुमलीभूतमहारवो वेदान्तविषयहितब्रह्मात्मदर्शनासङ्गशास्त्रकृतोच्छेदः । एष संसारवृक्षो ऽश्वत्थोऽश्वत्थवत्कामकर्म्मवातेरितनित्यप्रचलितस्वभावः । स्वर्गनरकतिर्य्यक्प्रेतादिभिः शाखाभिरवाक्शाखः अवाञ्चः शाखा यस्य सः । सनातनोऽनादित्वाच्चिरप्रवृत्तः । यदस्य संसारवृक्षस्य मूलं तदेव शुक्रं शुभ्रं शुद्धं ज्योतिष्मच्चैतन्यात्मज्योतिःस्वभावं

छेद्यत्वे युक्तिमाह । जन्मजरेत्यादिना ॥ प्रसिद्धवृक्षसाम्याद्वा वृक्षशब्दप्रयोग इत्यभिप्रेत्याह । अवसाने चेत्यादिना ॥ प्रसिद्धो वृक्षः स्थाणुर्वा पुरुषो वेति विकल्पास्पदो दृष्टस्तथाऽयमपि सङ्घातो वा परिणामो वाऽऽरब्धो वा सद्वाऽसद्वेत्यादीनामनेकेषां शतसङ्ख्याकया खण्डबुद्धिविकल्पानां विषय इत्यर्थः । किं सञ्ज्ञको ऽयं वृक्ष इत्यनध्यवसायगोचरः कश्चिद्वृक्षो दृष्टस्तथाऽयमपीति साम्यान्तरमाह । तत्त्वविजिज्ञासुभिरिति ॥ परस्य ब्रह्मणो विज्ञानक्रियाद्वयात्मको हिरण्यगर्भः प्रथमोऽवस्थाभेदोऽङ्कुरोऽस्येति तथोक्तः । बुद्धीन्द्रियाणां विषयाः शब्दादयः प्रवालाङ्कुराः

श्रिताः सर्व्वे तदु नात्येति कश्चन । एतद्वै तत् ॥ १ ॥

यदिदं किञ्च जगत्सर्व्वं प्राण एजति निःसृतम् ।

तदेव ब्रह्म सर्व्वमहत्त्वात् । तदेवामृतमविनाशिस्वभावमुच्यते कथ्यते । सत्यत्वात् । वाचारम्भणं विकारो नामधेयमनृतमन्यदतो मर्त्त्यम् । तस्मिन्परमार्थसत्ये ब्रह्मणि लोका गन्धर्व्वनगरमरीच्युदकमायासमाः परमार्थदर्शनाभावावगम्यमानाः श्रिता आश्रिताः सर्वे समस्ता उत्पत्तिस्थितिलयेषु तदु तद्ब्रह्म नात्येति नातिवर्त्तते मृदादिकमिव घटादिकार्य्यं कश्चन कश्चिदपि विकारः । एतद्वै तद्यद्विज्ञानादमृता भवन्तीत्युच्यते । जगतो मूलं तदेव नास्ति ब्रह्मासदेवेदं निःसृतमिति ॥ १ ॥

तत्र यदिदं किञ्च यत्किञ्चेदं जगत्सर्वं प्राणे परस्मिन् ब्रह्मणि सत्येजति कम्पते तत एव निःसृतं निर्गतं सत्प्रचलति नियमेन चेष्टते । यदेव जगदुत्पत्त्यादिकारणं ब्रह्म तन्महद्भयम् । महच्च तत् भयञ्च बिभेत्यस्मादिति महद्भयम् । वज्रमुद्यतमिव वज्रम् ।

किसलयान्यस्येति स तथोक्तः । श्रुत्यादीनि पलाशानि पत्राण्यस्येति ॥ सुखदुःखे प्राणिवेदना एवानेको रसोऽस्येति फलतृष्णैव सलिलावसेकस्तेन प्ररूढानि कर्म्मवासनादीनि सात्त्विकादिभावेन मिश्रीकृतानि दृढबन्धनान्यवान्तरमूलान्यस्य वटवृक्षस्येव तथोक्तः सत्यनामादिषु सप्तलोकेषु ब्रह्मादीनि भूतान्येव पक्षिणस्तैः कृतं नीडं यस्मिन् प्राणिनां सुखदुःखाभ्यामुद्भूतौ हर्षशोकौ ताभ्यां यथासङ्ख्येन जातानि नृत्यादीनि रुदितादिशब्दाश्च तैः कृततुमुलीभूतो महारवो यस्मिन्निति विग्रहः ॥ १ ॥

कार्य्यस्य शून्यतापर्य्यन्तं नष्टस्यासत्त्वपूर्व्वकमेव जन्म ततो नास्ति मूलमिति शङ्कते । यद्विना ज्ञानादिति ॥ तत्र शशवि-

महद्भयं वज्रमुद्यतं य एतद्विदुरमृतास्ते भवन्ति ॥ २ ॥

भयादस्याग्निस्तपति भयात्तपति सूर्य्यः । भया
दिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चमः ॥ ३ ॥

इह चेदशकद्बोद्धुम्प्राक् शरीरस्य विस्रसः ।

---

यथा वज्रोद्यतकरं स्वामिनमभिमुखीभूतं दृष्ट्वा भृत्या नियमेन तच्छासने प्रवर्त्तन्ते तथेदं चन्द्रादित्यग्रहनक्षत्रतारकादिलक्षणं जगत् सेश्वरं नियमेन क्षणमप्यविश्रान्तं वर्त्तत इत्युक्तं भवति । य एतद्विदुः स्वात्मप्रवृत्तिसाक्षिभूतमेकं ब्रह्मामृता अमरणधर्म्माणस्ते भवन्ति ॥ २ ॥

कथं तद्भयाज्जगद्वर्त्तत इत्याह । भयाद्भीत्या परमेश्वरस्याग्निस्तपति भयात्तपति सूर्य्यः भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चमः । न हीश्वराणां लोकपालानां समर्थानां सतां नियन्ता चेद्वज्रोद्यतकरवन्न स्यात्स्वामिभयभीतानामिव भृत्यानां नियता प्रवृत्तिरुपपद्यते ॥ ३ ॥

तच्चेह जीवन्नेव चेद्यद्यशकच्छक्नोति शक्तः सन् जानात्येतद्भयकारणं ब्रह्म बोद्धुमवगन्तुं प्राक् पूर्व्वं शरीरस्य विस्रसोऽवस्रंसनात् पतनात्संसारबन्धनाद्विमुच्यते । न चेदशकद्बोद्धुं ततोऽनवबोधात्सर्गेषु सृज्यन्ते येषु स्रष्टव्याः प्राणिन इति सर्गाः पृथिव्यादयो लोकास्तेषु सर्गेषु लोकेषु शरीरत्वाय शरीरभावाय

---

प्राणादेरसतः समुत्पत्त्यदर्शनात्सत्पूर्व्वकत्वप्रसिद्धेश्चास्ति सद्रूपं वस्तु जगतो मूलं तच्च प्राणपदलक्ष्यं प्राणप्रवृत्तेरपि हेतुत्वादित्यर्थः ॥ १ ॥ ३ ॥

सूर्य्यादीनां नियतप्रवृत्त्यनुपपत्त्या नियामकत्वेन सम्भावितं

ततः सर्गेषु लोकेषु शरीरत्वाय कल्पते ॥४॥

यथाऽऽदर्शे तथाऽऽत्मनि यथा स्वप्ने यथा पितृलोके। यथाप्सु परीव ददृशे तथा गन्धर्वलोके छायातपयोरिव ब्रह्मलोके ॥५॥

---

कल्पते समर्थो भवति शरीरं ग्रहीतीत्यर्थः । तस्माच्छरीरविस्रनात्प्रागात्मबोधाय यत्न आस्थेयः यस्मादिहैवात्मनो दर्शनादर्शस्थस्येव मुखस्य स्पष्टमुपपद्यते न लोकान्तरेषु ब्रह्मलोकादन्यत्र । स च दुष्प्राप्यः ॥ ४ ॥

कथमित्युच्यते । यथाऽऽदर्शे प्रतिबिम्बभूतमात्मानं पश्यति लोकोऽत्यन्तविविक्तं तथेहात्मनि स्वबुद्धावादर्शवन्निर्म्मलीभूतायां विविक्तमात्मनो दर्शनं भवतीत्यर्थः । यथा स्वप्ने विविक्तं जाग्रद्वासनोद्भूतं तथा पितृलोकेऽविविक्तमेवात्मनो दर्शनं कर्म्मफलोपभोगासक्तत्वात् । यथा वाऽप्स्वविविक्तावयवमात्मरूपं परीव ददृशे परिदृश्यत इव तथा गन्धर्व्वलोके ऽविविक्तमेव दर्शनमात्मनः । एवञ्च लोकान्तरेष्विति शास्त्रप्रामाण्यादवगम्यते । छायातपयोरिवात्यन्तविविक्तं ब्रह्मलोक एवैकस्मिन् । स च दुष्प्रापोऽत्यन्तविशिष्टकर्म्मज्ञानसाध्यत्वात् । तस्मादात्मदर्शनायेहैव यत्नः कर्त्तव्य इत्यभिप्रायः ॥ ५ ॥

कथमसौ बोद्धव्यः किंवा तदवबोधे प्रयोजनमित्युच्यते । इन्द्रियाणां श्रोत्रादीनां स्वस्वविषयग्रहणप्रयोजनेन स्वकारणेभ्यः

---

यत्पारमेश्वरं रूपं तदवगमायैवेह यत्नः कर्त्तव्य इत्याह । तच्चेति॥ इहैव चैव चेदशक्नोद्बोद्धुं शक्तः सन्निहैव चेज्जानाति तदा मुच्यत एवेति सम्बन्धः ॥ ४ ॥ ५ ॥

इन्द्रियाणाम्पृथग्भावमुदयास्तमयौ च यत् ।
पृथगुत्पद्यमानानां मत्वा धीरो न शोचति ॥६॥
इन्द्रियेभ्यः परं मनो मनसः सत्त्वमुत्तमम् ।
सत्त्वादधि महानात्मा महतोऽव्यक्तमुत्तमम् ॥७॥

---

आकाशादिभ्यः पृथगुत्पद्यमानानामत्यन्तविशुद्धात् केवलाच्चिन्मात्रात्मस्वरूपात् पृथग्भावं स्वभावविलक्षणात्मकतां तथा तेषामेवेन्द्रियाणामुदयास्तमयौ च यत्पृथगुत्पद्यमानानामुत्पत्तिप्रलयौ च जाग्रत्स्वापावस्थापेक्षया नात्मन इति मत्वा ज्ञात्वा विवेकतो धीरो धीमान् न शोचति । आत्मनो नित्यैकत्वस्वभावत्वादव्यभिचाराच्छोकादिकारणत्वानुपपत्तेः । तथा च श्रुत्यन्तरं तरति शोकमात्मविदिति ॥ ६ ॥

यस्मादात्मन इन्द्रियाणां पृथग्भाव उक्तो नाऽसौ वहिरधिगन्तव्यः । यस्मात्प्रत्यगात्मा सर्व्वस्य तत्कथमित्युच्यते । इन्द्रियेभ्यः परं मन इत्यादि । अर्थानामिहेन्द्रियसमानजातीयत्वादिन्द्रियग्रहणेनैव ग्रहणं पूर्व्ववदन्यत् । सत्त्वशब्दाद्बुद्धिरिहोच्यते ॥ ७ ॥

अव्यक्तात्तु परः पुरुषो व्यापको व्यापकस्याप्याकाशादेः

---

इन्द्रियेभ्यः परा ह्यर्था इति पूर्व्वमुक्तम् । इह त्वर्थानामग्रहणात्सर्व्वप्रत्यगात्मत्वं न सम्भवतीत्याशङ्क्याह । अर्थानामिहेति॥ बुद्धिसुखदुःखादिः साश्रयो गुणत्वाद्रूपवदिति वैशेषिकैरनुमीयते तदसत् । साश्रयत्वमात्रसाधने सिद्धसाधनत्वान्मनस एव कामादिगुणवत्त्वश्रवणादात्माश्रयत्वकल्पने च निर्गुणत्वशास्त्रविरुद्धत्वा-

अव्यक्तात्तु परः पुरुषो व्यापकोऽलिंगएव च।
यज्ज्ञात्वा मुच्यते जन्तुरमृतत्वञ्च गच्छति ॥८॥
न सन्दृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति

---

सर्व्वस्य कारणत्वात्। अलिङ्गो लिङ्गते गम्यते येन तल्लिङ्गं बुद्ध्यादि तदविद्यमानमस्येति सोऽयमलिङ्ग एव च। सर्व्वसंसारधर्म्मवर्जित इत्येतद्रूपं ज्ञात्वाऽऽचार्य्यतः शास्त्रतश्च मुच्यते जन्तुरविद्यादिहृदयग्रन्थिभिर्जीवन्नेव पतितेऽपि शरीरेऽमृतत्वञ्च गच्छति। सोऽलिङ्गः परो व्यक्तात्पुरुष इति पूर्व्वेण सम्बन्धः ॥८॥

कथं तर्हि तस्यालिङ्गस्य दर्शनमुपपद्यत इत्युच्यते। न सन्दृशे दर्शनविषये न तिष्ठति प्रत्यगात्मनोऽस्य रूपम्। अतो न चक्षुषा सर्व्वेन्द्रियेण। चक्षुर्ग्रहणस्योपलक्षणार्थत्वात्। पश्यति नोपलभते कश्चन कश्चिदप्येनं प्रकृतमात्मानम्। कथं तर्हि तत्पश्येदित्युच्यते। हृदा हृत्स्थया बुद्ध्या। मनीषा मनसः सङ्कल्पादिरूपस्येष्टे नियन्तृत्वेनेति मनीट् तया मनीषाऽविकल्प-

---

दात्मना सह बुद्ध्यादेरविनाभावाग्रहणाच्च बुद्ध्यादि नात्मलिङ्गमित्याह। लिङ्ग्यते गम्यते येनेति ॥ ६ ॥ ७ ॥ ८ ॥

कथं दर्शनमुपपद्यत इति प्रष्टुः कोऽभिप्रायः विषयतया दर्शनं वक्तव्यम् उताविषयतयैव दर्शनोपायो वाच्यः ॥ प्रथमं प्रत्याह। न सन्दृश इति ॥ रूपादिमत्तद्विशेषणञ्च दर्शनविषययोग्यं भवति तदभावादित्यर्थः ॥ द्वितीयं प्रत्याह। कथं तर्हीति ॥ वाह्यकरणग्रामोपरमेऽपि यदा मनो विषयान्सङ्कल्पते तदा मुमुक्षोर्बुद्धिस्तस्य नियन्त्री भवति। हे मनः किमर्थं त्वं पिशाचवत्प्रधावसि। न तावत्स्वप्रयोजनार्थम् ॥ तव जडत्वात्प्रयोजन-

कश्चनैनम् । हृदा मनीषामनसाभि क्लृप्तो य एतद्विदुरमृतास्ते भवन्ति ॥ ६ ॥

यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह ।

यित्र्या । मनसा मननरूपेण सम्यग्दर्शनेन । अभिक्लृप्तोऽभिसमर्थितोऽभिप्रकाशित इत्येतत् । आत्मा ज्ञातुं शक्यत इति वाक्यशेषः । तमात्मानं ब्रह्मैतद्ये विदुरमृतास्ते भवन्ति ॥ ९ ॥

कथं प्राप्यत इति यदर्थो योग उच्यते । यदा यस्मिन् काले स्वविषयेभ्यो निवर्त्तितान्यात्मन्येव पञ्च ज्ञानार्थत्वात् श्रोत्रादी-

सम्बन्धानुपपत्तेर्व्विषयाणां च क्षयिष्णुत्वादिदोषदुष्टानां सम्बन्धेन प्रयोजनानुपपत्तेः । नापि चेतनार्थम् । तस्यासङ्गत्वात्परमानन्दस्वभावत्वाच्चेति नियन्तृत्वेन बुद्धिर्मनीडुच्यत इत्याह । मनस इति ॥ अविकल्पयित्र्येति ॥ विषयकल्पनाशून्यया ब्रह्मास्मीत्यविषयतयैव ब्रह्मीभावव्यञ्जिकया महावाक्योत्थया बुद्धिवृत्त्या ज्ञातुं शक्यत इति सम्बन्धः ॥ कथम्भूत आत्मेत्यत आह । मनसेति ॥ यद्यन्मया दृश्यते वाह्यं घटादि तत्तदहं यथा न भवामि तथाऽस्मिन्नपि सङ्घाते यद्यद्दृश्यते तदहं न भवामि किन्तु योऽत्र ज्ञोऽशेषोऽस्ति सर्व्वशरीरेष्वेकलक्षणलक्षितत्वादेक एवेति विचारेण प्रथमं सम्भावित इत्यर्थः ॥ श्रुतवेदान्तानामपि केषाञ्चिद्ब्रह्मास्मीति बुद्धिस्थैर्य्यादर्शनादस्ति किञ्चित्प्रतिबन्धकान्तरं तदपनयायोपायोऽप्यन्यो वक्तव्य इत्यभिप्रेत्याह । सा हृदिति ॥ श्रवणमननाभ्यां प्रमाप्रमेयासम्भावनानिरासेऽपि चित्तस्यानेकाग्रतादोषः प्रतिबन्धकः सम्भवति तदपनयाय योगोऽनुष्ठातव्य इत्युपदिश्यत इत्यर्थः ॥ ६ ॥

यदनुगतानीति येन मनसाऽधिष्ठितानि तेन सहाऽवति-

बुद्धिश्च न विचेष्टते तामाहुः परमाङ्गतिम् ॥१०॥
तां योगमिति मन्यन्ते स्थिरामिन्द्रियधारणाम् ।

---

नीन्द्रियाणि ज्ञानान्युच्यन्तेऽवतिष्ठन्ते सह मनसा । यदनुगतानि तेन सङ्कल्पादि व्यावृत्तेनान्तःकरणेन बुद्धिश्चाध्यवसायलक्षणा न विचेष्टते स्वव्यापारेषु न चेष्टते न व्याप्रियते तामाहुः परमाङ्गतिम् ॥ १० ॥

तामीदृशीं तदवस्थां योगमिति मन्यन्ते वियोगमेव सन्तम् । सर्व्वानर्थसंयोगवियोगलक्षणा हीयमवस्था योगिनः । एतस्यां ह्यवस्थायामविद्याध्यारोपणवर्जितस्वरूपप्रतिष्ठ आत्मा स्थिरामिन्द्रियधारणाम् । स्थिरामचलामिन्द्रियधारणां वाह्यान्तःकरणानां धारणामित्यर्थः । अप्रमत्तः प्रमादवर्जितः समाधानं प्रति नित्यं प्रयत्नवांस्तदा तस्मिन् काले यदैव प्रवृत्तयोगो भवतीति सामर्थ्यादवगम्यते । न हि बुद्ध्यादिचेष्टाभावे प्रमादसम्भवोऽस्ति । तस्मात्प्रागेव बुद्ध्यादिचेष्टोपरमात्प्रमादो विधीयते ।

---

ष्ठन्ते निवृत्तव्यापाराणि भवन्तीत्यर्थः ॥ वियोगमेव सन्तं योगमिति विरुद्धलक्षणया मन्यन्त इत्युक्तं तत्स्फुटयति सर्व्वानर्थेति ॥ उपसंहृतं मनो यदि सुषुप्तिं गच्छेत्तदा सानर्थबीजावस्था भवति । तद्व्यावृत्तये पूर्णं ब्रह्मास्मीत्यावृत्तौ योजयेदावृत्तौ नियुक्तं विषयेषु विक्षिप्तं चेत्स्यात्तद्दोषदर्शनेन ततो व्यावृत्तमपि तत्तत्स्थं चेत्स्यात्तथापि यावत्कषायावस्था ततो निरुद्धं मनो यदा न जागर्त्ति न स्वपिति न चान्तरालावस्थं भवति पूर्णब्रह्मावभासकतयैव क्षीणं भवति तदा सर्व्वानर्थवियोगलक्षणा साऽवस्था भवतीत्यर्थः । योगारम्भकाले प्रमादवर्जनं

**अप्रमत्तस्तदा भवति योगो हि प्रभवाप्ययौ ॥ ११ ॥**
**नैव वाचा न मनसा प्राप्तुं शक्यो न चक्षुषा ।**

---

अथवा यदैवेन्द्रियाणां स्थिरा धारणा तदानीमेव निरङ्कुशमप्रमत्तत्वमित्यतोऽभिधीयतेऽप्रमत्तस्तदा भवतीति । कुतः । योगो हि यस्मात्प्रभवाप्ययौ उपजनापायधर्म्मका इत्यर्थोऽतोऽपायपरिहारायाप्रमादः कर्त्तव्य इत्यभिप्रायः ॥ ११ ॥

बुद्ध्यादिचेष्टाविषयं चेद्ब्रह्मेदं तदिति विशेषतो गृह्येत बुद्ध्याद्युपरमे च ग्रहणकारणाभावादनुपलभ्यमानं नास्त्येव ब्रह्म यद्धि करणगोचरं तदस्तीति प्रसिद्धं लोके । विपरीतञ्चासदिति अतश्चानर्थको योगोऽनुपलभ्यमानत्वाद्वा नास्तीत्युपलब्धव्यं ब्रह्मेत्येवं प्राप्ते इदमुच्यते । सत्यं नैव वाचा मनसा न चक्षुषा नान्यैरपीन्द्रियैः प्राप्तुं शक्य इत्यर्थः । तथापि सर्व्वविशेषरहितोऽपि जगतो मूलमित्यवगतत्वादस्त्येव कार्य्यप्रविलापनस्यास्तित्वनिष्ठ-

---

विधेयतया व्याख्यायानुवादपरतया व्याचष्टे । अथवेति ॥ विधिपक्षे हेतुं पृच्छति । कुत इति ॥ १० ॥ ११ ॥

उत्तरमन्त्रमवतारयितुं शङ्कामुद्भावयति । बुद्ध्यादिचेष्टाविषयञ्चेति ॥ घटोऽस्तीति प्रतिपन्नस्य घटस्य मुद्गराभिघाताद्विलापने घटाकार एव विलीयते । नास्तित्वांशस्तस्य कपालादावप्यनुवृत्तिदर्शनात् । अतः कार्य्यप्रविलापनस्यास्तित्वनिष्ठत्वान्न शून्यतापर्य्यवसायी लय इत्युक्तमेतत् स्फुटयति । तथाहीति ॥ स्थूलस्य कार्य्यस्य विलये सूक्ष्मं तत्कारणमवशिष्यते तस्यापि विलये ततः सूक्ष्ममिति यावद्दर्शनव्याप्तिमुपलभ्य यत्र न दृश्यते तत्रापि मूर्त्तविलयस्यावश्यम्भावित्वान्न सन्मात्रमेवामूर्त्तमवतिष्ठत इति कार्य्यमेव सौक्ष्म्यतारतम्यपारम्पर्य्येणानुमीयमाणं सद्बुद्धिनिष्ठां पुरुषस्य गमयतीत्यर्थः ॥ ननु यद्ग्राह्यं तदसत् यथा स्वप्नदर्शनमिति व्याप्तिदर्शनादस्तित्वेन दृश्यस्यासत्त्वाद्बु-

मात्रा मात्राश्च पादा अकार उकारो मकार इति ॥८॥

जागरितस्थानो वैश्वानरोऽकारः प्रथमा

---

मधिकृत्य वर्त्तत इत्यभिप्रायः । अयमात्मनो ये पादास्त-
ओङ्कारस्य मात्राः । कास्ताः । अकार उकारो मकार
इति ॥८॥

तत्र विशेषनियमः क्रियते । जागरितस्थानो वैश्वा-
नरो यः स ओङ्कारस्याकारः प्रथमा मात्रा । केन सामा-
न्येनेत्याह । आप्तेराप्तिर्व्याप्तिरकारेण सर्व्वा वाग्व्याप्ता ।
अकारो वै सर्व्वा वागिति श्रुतेः । तथा वैश्वानरेण जगत्।
तस्य ह वैतस्यात्मनो वैश्वानरस्य मूर्द्धैव सुतेज इत्यादि
श्रुतेः । अभिधानाभिधेययोरेकत्वञ्चावोचाम । आदिरस्य
विद्यत इत्यादिमद्यथैवादिमदकाराख्यमक्षरं तथैव वैश्वा-

---

नामधमाधिकारिणामात्मध्यानविधानायारोपदृष्टिमेवावष्टभ्य व्याचष्टे
अभिधेयेत्यादिना ॥ अध्यक्षरमित्येतद्व्याकरोति । अक्षरमिति ॥ अध्य-
क्षरमित्यत्र किं पुनस्तदक्षरमिति प्रश्नपूर्व्वकं व्युत्पादयति किंपुनरि
त्यादिना ॥ तस्य विशेषणान्तरं दर्शयति । सोऽयमिति ॥ आत्मा हि
पादशो विभज्यते मात्रामधिकृत्य पुनरोङ्कारो व्यवतिष्ठते तत्कथं
पादशो विभज्यमानस्याधिमात्रत्वमिति पृच्छति । कथमिति ॥ पादानां
मात्राणाञ्चैकत्वाद्वैतदविरुद्धमित्याह । आत्मन इति ॥८॥

पादानां मात्राणाञ्च मध्ये विश्वाख्यविशेषस्याकारविशेषत्वं निग-
मयति । तत्रेति ॥ विश्वाकारयोरेकत्वं सादृश्ये सत्यारोपयितुं शक्य-
मन्यत्र तस्यैव वह्निर्नारोपसम्भवो नात्तयाह किं तदारोपप्रयोजकं

मात्राप्तेरादिमत्त्वाद्वाप्नोति ह वै सर्वान् कामा नादिश्च भवति य एवं वेद ॥९॥

स्वप्नस्थानस्तैजस उकारो द्वितीया मात्रो-त्कर्षादुभयत्वाद्वोत्कर्षति ह वै ज्ञानसन्ततिं

---

नरस्तस्माद्वा सामान्यादकारत्वं वैश्वानरस्य । तदेकत्वविदः फलमाह । आप्नोति ह वै सर्वान् कामानादिः प्रथमश्च भवति महतां य एवं वेद यथोक्तमेकत्वं वेदेत्यर्थः ॥९॥

स्वप्नस्थानस्तैजसो यः स ओङ्कारस्योकारो द्वितीया-मात्रा । केन सामान्येनेत्याह । उत्कर्षात् । अकारादुत्

---

साद्दश्यमिति पृच्छति । केनेति ॥ सामान्योपन्यासपरां श्रुतिमवतार-यति । आह्वेति ॥ व्याप्तिमेवाकारस्य श्रुत्युपन्यासेन व्यनक्ति । अका-रेणेति ॥ अध्यात्माधिदैविकयोरेकत्वं पूर्व्वमुक्तमुपेत्य विश्वस्य वैश्वानरस्य जगद्व्याप्तिं श्रुत्यवष्टम्भेन स्पष्टयति । तथेति ॥ किञ्च सामान्यद्वारा वाच्यवाचकयोरेकत्वमारोप्यं न भवति तयोरेकत्वस्य प्रागेवोक्तत्वादि-त्याह । अभिधानेति ॥ सामान्यान्तरमाह । आदिरिति ॥ तदेव स्फुट-यति । यथैवेति ॥ उकारो मकारश्चेत्युभयमपेक्ष्य प्रथमपाठादिमत्त्व-मकारस्य द्रष्टव्यम् । विश्वस्य पुनरादिमत्त्वम् । तैजसप्राज्ञापेक्ष्या-द्यस्थाने वर्त्तमानत्वादित्यर्थः ॥ उक्तस्य सामान्यान्तरस्य फलं दर्शयति । तस्मादिति ॥ किमर्थमित्थं सामान्यद्वारा तयोरेकत्वमुच्यते तद्विज्ञानस्य फलवत्त्वादित्याय । तदेकत्वेति ॥९॥

साद्दश्यविकल्पादेव फलविकल्पः ॥ द्वितीयपादस्य द्वितीयमा-त्रायाश्चैकत्वं व्यपदिशति । स्वप्नेत्यादिना ॥ यथा प्रथमपादस्य प्रथममात्रायाश्चैकत्वं सामान्यं पुरस्कृत्योक्तं तथा द्वितीयपादस्य

समानश्च भवति नास्याब्रह्मवित्कुले भवति य एवं वेद ॥१०॥

---

त्कृष्ट इव ह्युकारस्तथा तैजसो विश्वादुभयत्वाद्वा अकारमकारयोर्मध्यस्थ उकारस्तथा विश्वप्राज्ञयोर्मध्ये तैजसोऽत उभयभाक्त्वसामान्याद्विद्वत्फलमुच्यते । उत्कर्षति ह वै ज्ञानसन्ततिम् । विज्ञानसन्ततिं वर्द्धयतीत्यर्थः । समानस्तुल्यश्च मित्रपक्षस्येव शत्रुपक्षाणामप्यप्रद्वेष्यो भवति । अब्रह्मविदस्य कुले न भवति य एवं वेद ॥१०॥

---

द्वितीयमात्रायास्तैकत्वं सत्येव सामान्ये वक्तव्यं तदभावे तदारोपायोगादिति पृच्छति । केनेति ॥ सामान्योपन्यासपूर्व्वकमेकत्वारोपं साधयति । आहेति । अकारस्य सर्व्ववाग्व्यापकत्वेनोत्कृष्टत्वस्य स्पष्टत्वात्कथं तस्मादुकारस्योत्कर्षो वर्ण्यते तत्राह । अकारादिति ॥ अकारस्योत्कर्षो वास्तवेऽपि पाठक्रमादुकारस्योत्कर्षवत्त्वमौपचारिकमित्यकारस्यानुमर्थमुपोद्वलयति । यथा अकारादुकारोत्कर्षो दर्शितस्तथा विश्वात्तैजसस्योत्कर्षो वक्तव्यः॥ सूक्ष्माभिमानिनः स्थूलाभिमानिनः सकाशादुत्कर्षस्य युक्तत्वादित्याह । तथेति ॥ उकारतैजसयोर्न प्रत्येकमुभयत्वं एकत्वस्योभयत्वव्याघातादित्याशङ्क्य व्याकरोति । अकारेति ॥ मध्यस्थत्वादुकारतैजसयोरुभयभाक्त्वं सामान्यं तस्मात्तयोरेकत्वं शक्यमारोपयितुमित्याह । अत इति ॥ यथोक्तैकत्वविज्ञानं फलवत्त्वादुपादेयमिति सूचयति । विद्वदिति ॥ ज्ञानसन्ततेरुत्कर्षो नाम कुतश्चित्तस्याभेदावेदनं तस्येष्टत्वाभावे कथं फलवत्त्वमित्याशङ्क्य व्याचष्टे । विज्ञानेति ॥ पक्षद्वयतुल्यत्वमेव प्रकटयति । अप्रद्वेष्य इति ॥ सादृश्यभेदेन फलभेदमावेद्य द्विविधसादृश्यप्रयुक्तैकत्वविज्ञानफलमाह । अब्रह्मविदिति ॥१०॥

सुषुप्तस्थानः प्राज्ञो मकारस्तृतीया मात्रा मितेरपीतेर्वा मिनोति ह वा इदं ॐ सर्व्वमपीतिश्च भवति य एवं वेद ॥११॥

---

सुषुप्तस्थानःप्राज्ञो यः स ओङ्कारस्य मकारस्तृतीया मात्रा। केन सामान्येनेत्याह सामान्यमिदमत्र। मितेर्मितिर्मानं मीयेत इव हि विश्वतैजसौ प्राज्ञेन प्रलयोत्पत्त्योः प्रवेशनिर्गमाभ्याम्। प्रस्थेनेव यवाः। तथा ओङ्कारसमाप्तौ पुनः प्रयोगे च प्रविश्य निर्गच्छत इवाकारोकारौ मकारे। अपीतेर्वाऽपीतिरप्यय एकीभावः। ओङ्कारोच्चारणेऽन्त्येऽक्षरे एकीभूताविवाकारोकारौ। तथा विश्वतैजसौ सुषुप्तकाले प्राज्ञे। अतो वा सामान्यादेकत्वं प्राज्ञमकारयोः। विद्वत्फलमाह। मिनोति ह वेदं सर्व्वं जगद्याथात्म्यं जानातीत्यर्थः। अपीतिश्च जगत्कारणात्मा भवतीत्यर्थः॥ अत्रावान्तरफलवचनं प्रधानसाधनस्तुत्यर्थम्॥११॥

---

तृतीयपादस्य तृतीयमात्रायाश्चैकत्वमुपन्यस्यति। सुषुप्तेति॥ पूर्व्ववदेकत्वप्रयोजकमत्रापि मध्यपूर्व्वकमुपवर्णयति। केनेत्यादिना॥ मानमेव विवृणोति॥ मीयेत इति॥ ओमित्योङ्कारस्य नैरन्तर्य्येणोच्चारणे सत्यकारोकारौ प्रथमं मकारे प्रविश्य पुनस्तस्मान्निर्गच्छन्ताविवोपलभ्येते तेन मकारेऽपि मानसामान्यमिति वक्तव्यमित्यर्थः। एकीभावमेव स्फोरयति। ओङ्कारेति॥ मकारवत्प्राज्ञेऽपि तदस्ति सामान्यमित्याह। तथेति॥ उक्तस्यापि सामान्यस्य फलमाह। अतो वेति॥ सामान्यद्वयद्वारेण प्राज्ञमकारयोरेकत्वज्ञानं नाविवक्षितं फलवत्त्वादित्याह। विद्वदिति॥ अविदुषोऽपि जगद्विषयज्ञानमस्ती-

## ॥ गौड़पादीयश्लोकाः ॥

विश्वस्यात्वविवक्षायामादिसामान्यमुत्क-
टम् । मात्रासम्प्रतिपत्तौ स्यादाप्तिसामान्यमेव
च ॥१९॥

---

अत्रैते श्लोका भवन्ति । विश्वस्यात्वमकारमा-
त्रत्वं यदा विवक्ष्यते तदादित्वसामान्यमुक्तन्यायेनोत्कट-
मुद्भूतं दृश्यत इत्यर्थः । अत्वविवक्षायामित्यस्य व्याख्यानं
मात्रासम्प्रतिपत्ताविति । विश्वस्याकारमात्रत्वं यदा सम्प्र-
तिपद्यत इत्यर्थः । आप्तिसामान्यमेव चोत्कटमित्यनुवर्त्तते
चशब्दात् ॥१९॥

---

त्याशङ्क्य विशिनष्टि । जगद्यायात्म्यमिति ॥ सर्वात्मत्वं
प्रलयभवममनिष्टत्वान्न फलमित्याशङ्क्याह । जगदिति ॥ तत्र तत्रैकत्व
ज्ञाने फलभेदकथनादुपासनाभेदमाशङ्क्याह्य पु फलभेदश्रुतेरर्थवादत्व-
मुपेत्याह । अत्रेति ॥ पादानां मात्राणाञ्च क्रमादेकत्वविज्ञाने फलकथनं
सर्व्वान् पादान्मात्राश्च सर्व्वाः स्वात्मन्यन्तर्भाव्य प्रधानस्य ब्रह्मध्यानस्य
साधनं यदोङ्काराख्यमक्षरं तस्य स्तुतावुपयुज्यते तेन च तदेवैकमुपा
सनमितरस्यातदङ्गत्वाच्चोपास्तिभेदकत्वमित्यर्थः॥११॥

पादानां मात्रायाश्च यदेकत्वं सनिमित्तं श्रुत्योपन्यस्तं तत्र श्रुत्यर्थ
विवरणरूपान् पूर्व्ववदेव श्लोकानवतारयति । अत्रेति ॥ प्रथमपादस्य
प्रथममात्रायाश्चाभेदारोपार्थमुक्तं सामान्यद्वयं विशदयति । विश्वस्येति॥
उक्तन्यायेनादिरस्येत्यादावपिति शेषः । पुनरुक्तिपरिहारद्वारा विव-
क्षितार्थमाह अत्रेति ॥ अनुवृत्तिद्योतकं दर्शयति चशब्दादिति ।१९॥

तैजसस्योत्वविज्ञाने उत्कर्षो दृश्यते स्फुटम् ।
मात्रासम्प्रतिपत्तौ स्यादुभयत्वं तथाविधम् ॥२०॥
मकारभावे प्राज्ञस्य मानसामान्यमुत्कटं ।
मात्रासम्प्रतिपत्तौ तु लयसामान्य मेव च ॥२१॥
त्रिषु धामसु यत्तुल्यं सामान्यं वेत्ति

---

तैजसस्योत्वविज्ञाने उकारत्वविवक्षायामुत्कर्षो दृश्यते स्फुटं स्पष्ट इत्यर्थः । उभयत्वञ्च स्फुटमेवेति । पूर्ववत् सर्व्वम् ॥२०॥

मकारत्वे प्राज्ञस्य मितिलयावुत्कृष्टे सामान्य इत्यर्थः ॥२१॥

यथोक्तस्थानत्रये तुल्यमुक्तं सामान्यं वेत्त्येवमेवैतदिति निश्चितो यः सम्पूज्यो वन्द्यश्च ब्रह्मवित्लोके भवति ॥२२॥

यथोक्तैः सामान्यैरात्मपादानां मात्राभिः सहैकत्वं

---

द्वितीयपादस्य द्वितीयमात्रायाश्चैकत्वारोपप्रयोजकद्वयं श्रुत्युक्तं व्यनक्ति । तैजसस्येति ॥ स्फुटमेवेति ॥ उत्कविज्ञान इत्यस्य व्याख्यानं मात्रासम्प्रतिपत्ताविति तद्व्याख्यानं सर्व्वमित्युच्यते ततपूर्व्वनद्द्रष्टव्यमित्युच्यते । पूर्ववदिति ॥२ ॥

तृतीयपादस्य तृतीयमात्रायाश्चैकत्वाध्यासे सामान्यद्वयं श्रुत्वा दर्शितं विशदयति । मकारेति अक्षरार्थस्य पूर्व्ववदेव सुज्ञानत्वात्तात्पर्य्यार्थमाह । मकारत्व इति ॥२१॥

विश्वादीनामकारादीनाञ्च यत्तुल्यं सामान्यमुक्तं तद्विज्ञानं स्तौति

निश्चितः। सम्पूज्यः सर्व्वभूतानां वन्द्यश्चैव महामुनिः ॥२२॥

अकारो नयते विश्वमुकारश्चापि तैजसम्। मकारश्च पुनः प्राज्ञं नामात्रे विद्यते गतिः ॥२३॥

---

कृत्वा यथोक्तोङ्कारं प्रतिपद्य यो ध्यायीत तमकारो नयते विश्वं प्रापयति अकारालम्बनोङ्कारं विद्वान् वैश्वानरो भवतीत्यर्थः। तथोकारस्तैजसम्। मकारश्चापि पुनः प्राज्ञमिशब्दान्नयत इत्यनुवर्त्तते। क्षीणे तु मकारे बीजभावक्षयादमात्रे ओङ्कारे गतिर्न विद्यते क्वचिदित्यर्थः ॥२३॥

---

त्रिष्विति ॥ यथोक्तस्थानत्रयं जागरितं स्वप्नं सुषुप्तञ्चेति। त्रितयं तुल्यं पादानां मात्राणाञ्चेति शेषः॥ उक्तं सामान्यमाप्तिरुत्कर्षो मितिरित्यादिना॥ महामुनिरित्यस्यार्थमाह। ब्रह्मविदिति ॥२२॥

पूर्वोक्तसामान्यज्ञानवतो ध्याननिष्ठस्य फलविभागं दर्शयति। अकार इति॥ यत्र तु पादानां मात्राणाञ्च विभागो नास्ति तस्मिन्नोङ्कारे तुरीयात्मनि व्यवस्थितस्य प्राप्तृप्राप्तव्यप्राप्तिविभागो नास्तीत्याह। नामात्र इति॥ ओङ्कारध्यायिनमकारो विश्वं प्रापयतीत्युक्तमयुक्तम्। विश्वप्राप्तेर्ध्यानमन्तरेण सिद्धत्वात्। अकारस्य चाध्येयस्योक्तफलप्रापकत्वायोगादित्याशङ्क्याह। अकारेति॥ सदाश्रम्बमं तत्प्रधानमिति यावत्। अकारप्रधानमोङ्कारं ध्यायतो यथा वैश्वानरप्राप्तिस्तथोकारप्रधानं तमेव ध्यायतस्तैजसस्य हिरण्यगर्भप्राप्तिर्भवतीत्याह। तथेति॥ यश्च मकारप्रधानमोङ्कारं ध्यायति तस्य प्राज्ञाव्याकृतप्राप्तिर्युक्तेत्याह। मकारश्चेति॥ क्रियापदानुवृत्तिरुभयत्र विवक्षिता॥ चतुर्थपादं व्याचष्टे। क्षीणे त्विति स्थूलप्रपञ्चो जागरितं

## ॥ उपनिषद् ॥

अमात्रश्चतुर्थोऽव्यवहार्य्यः प्रपञ्चोपशमः शिवोऽद्वैत एवमोङ्कार आत्मैव संविशत्यात्म-

अमात्रो मात्रा यस्य नास्ति सोऽमात्र ओङ्कारश्चतुर्थ-स्तुरीय आत्मैव केवलोऽभिधानाभिधेयरूपयोर्वाङ्मनसयोः क्षीणत्वादव्यवहार्य्यः । प्रपञ्चोपशमः शिवोऽद्वैतः संवृत्त एवं यथोक्तविज्ञानवता प्रयुक्त ओङ्कारस्त्रिमात्रस्त्रिपादः। आत्मैव संविशत्यात्मना स्वेनैव स्वं पारमार्थिकमात्मानं य एवं वेद । परमार्थदर्शिनां ब्रह्मविदां तृतीयं बीजभावं दग्ध्वाऽऽत्मानं प्रविष्ट इति न पुनर्जायते तुरीयस्याबीजत्वात् । न हि रज्जुसर्पयोर्विवेके रज्ज्वां प्रविष्टः

विश्वश्चेत्येतत्त्रितयमकारमात्रं स्थूलप्रपञ्चः स्वप्नस्तैजसश्चेतत्त्रितयमुकारमात्रं प्रपञ्चद्वयकारणं सुषुप्तं प्राज्ञश्चेत्येतत् त्रितयं मकारमात्रं तत्रापि पूर्वं पूर्वमुत्तरोत्तरभावमापाद्यते । तदेवं सर्वमोङ्कारमात्रमिति ध्यात्वा स्थितस्य यदेतावन्तं कालमोमिति रूपेण प्रतिपन्नं तत्परिशुद्धं ब्रह्मैवेत्याचार्य्योपदेशसमुत्थसम्यग्ज्ञानेन पूर्वोक्तसर्वविभागनिमित्ताज्ञानस्य मकारत्वेन गृहीतस्य च येऽब्रह्मण्येव शुद्धे पर्य्यवसितस्य न क्वचिद्गतिरुपपद्यते परिच्छेदाभावादित्यर्थः ॥२३॥

प्रत्यक्चैतन्यमोङ्कारसंवेदनं त्रिमात्रेणोङ्कारेणाध्यस्तेन तादात्म्या-दोङ्कारो निरुच्यते । तस्य परेण ब्रह्मणैक्यममात्रत्वादिश्रुत्या विवक्ष्यते तामवतार्य्य व्याकरोति । अमात्र इत्यादिना ॥ केवलत्वमद्वितीयत्वम् । विशेषणान्तरमुपपादयति । अभिधानेति ॥ अभिधानं वागभिधेयं मनस्तत्तातिरिक्तार्थाभावस्याभिधास्यमानत्वात्तयोर्मूलाज्ञानक्षयेण क्षीणत्वादिति हेत्वर्थः ॥ अव्यवहार्य्यश्चेदात्मा नास्त्येवेत्याशङ्क्य विकार

नाऽऽत्मानं य एवं वेद य एवं वेद ॥१२॥

---

सर्पो बुद्धिसंस्कारात् पुनः पूर्ववत्तद्विवेकिनामुत्थास्यति । मन्दमध्यमधियान्तु प्रतिपन्नसाधकभावानां सन्मार्गगामिनां संन्यासिनां मात्राणां पादानाञ्च क्लृप्तसामान्यविदां यथावदुपास्यमान ओङ्कारो ब्रह्मप्रतिपत्तये आलम्बनीभवति । तथा च वक्ष्यति । आश्रमास्त्रिविधा हीना इत्यादि ॥१२॥

---

जातविनाशावधित्वेनात्मनोऽविशेषान्नैवमित्याह । प्रपञ्चेति ॥ तस्य च सर्वानर्थाभावोपलक्षितस्य परमानन्दत्वेन पर्य्यवसानं सूचयति । शिव इति ॥ तस्यैव सर्वद्वैतकल्पनाधिष्ठानत्वेनावस्थानमभिप्रेत्याह अद्वैत इति ॥ ओङ्कारस्तुरीयः सन्नात्मैवेति यदुक्तं तदुपसंहरति एवमिति ॥ यथोक्तं विज्ञानं पादानां मात्राणाञ्चैकत्वम् । न च पादा-मात्राश्च तुरीयात्मन्योङ्कारे सन्ति । पूर्वपूर्वविभागस्योत्तरोत्तरान्तर्भावेन क्रमादात्मनि पर्य्यवस्यतीत्येवंलक्षणस्तद्वता प्रयुक्तः सन्नोङ्कारो मात्राः पादाश्च स्वस्मिन्नन्तर्भाव्यावस्थितस्यात्मनो भेदमसहमानस्तद्रूपो भवतीत्यर्थः ॥ उक्तैक्यज्ञानस्य फलमाह । संविशतीति ॥ सुषुप्ते ब्रह्मप्राप्तस्य पुनरुत्थानवत् मुक्तस्यापि पुनर्जन्म स्यादित्याशङ्क्याह । परमार्थेति ॥ सुषुप्तस्य पुनरुत्थानं बीजभूताज्ञानस्य सत्त्वादुपपद्यते । इह तु बीजभूतमज्ञानं तृतीयं सुषुप्ताख्यं दग्ध्वैव तेषामात्मानं तुरीयं प्रविष्टो विद्वानिति नासौ पुनरुत्थानमर्हति । कारणमन्तरेण तद्योगादित्यर्थः ॥ तुरीयमेव पुनरुत्थानबीजभूतं भविष्यतीत्याशङ्क्य कार्य्यकारणविनिर्मुक्तस्य तस्य तद्वियोगान्नैवमित्याह । तुरीयस्येति ॥ मुक्तस्यापि पूर्वसंस्कारात् पुनरुत्थानमाशङ्क्य दृष्टान्तेन निराचष्टे न हीति ॥ पूर्वं सर्पादित्यविवेकावस्थायामित्यर्थः । तद्विवेकिनां रज्जुसर्पविवेकविज्ञानवतामिति यावत् । बुद्धिसंस्कारादित्यत्र बुद्धिशब्देन सर्प-

इति माण्डूक्योपनिषन्मूलमन्त्राः समाप्ति-ङ्गताः ॥ ओं तत्सत् हरिः ओं ॥

॥ गौडपादीयश्लोकाः ॥

ओंङ्कारं पादशो विद्यात् पादा मात्रा न संशयः । ओंङ्कारं पादशो ज्ञात्वा न कि-ञ्चिदपि चिन्तयेत् ॥२४॥

---

इति माण्डूक्यमूलमन्त्रभाष्यम् ॥ ओं ॥

पूर्ववदत्रैते श्लोका भवन्ति । यथोक्तैः सामान्यैः पादा एव मात्रा मात्राश्च पादास्तस्मादोङ्कारं पादशो विद्यादित्यर्थः । एवमोङ्कारे ज्ञाते दृष्टार्थमदृष्टार्थं वा न किञ्चित्प्रयोजनं चिन्तयेत्कृतार्थत्वादित्यर्थः ॥२४॥

---

भ्रान्तिर्गच्छति । उत्तमाधिकारिणामोङ्कारद्वारेण परिशुद्धब्रह्मात्मैक्यविदामपुनरावृत्तिलक्षणमुक्तं फलम् । इदानीं मन्दानां लभ्यमानाश्च कथं ब्रह्मप्रतिपत्त्या फलप्राप्तिरित्याशङ्क्याह । मन्देति ॥ तेषामपि क्रमभुक्तिरविरुद्धेत्यर्थः ॥ तत्रैव वाक्यशेषानुकूल्यं कथयति । तथा चेति ॥१२॥

इति माण्डूक्यमूलमन्त्रभाष्यटीका समाप्ता ॥ ओं ॥

यथा पूर्वमाचार्येण श्रुत्यर्थप्रकाशकाः श्लोकाः प्रणीतास्तथोत्तरेऽपि श्लोकाः श्रुत्युक्तेऽर्थे एवं सम्भवन्तीत्याह । पूर्ववदिति ॥ ओङ्कारस्य पादशो विद्या कीदृशीत्याशङ्क्याह । पादा इति॥ पादानां मात्राणाञ्चान्योन्यमेकत्वं कृत्वा तद्विभागविधुरमोङ्कारं ब्रह्म बुद्ध्याध्यायतो-भवति कृतार्थतेति दर्शयति । ओंङ्कारमिति । तस्मात्पादानां मात्रा-णाञ्चान्योन्यमेकत्वादित्यर्थः । तदेकत्वं पुरस्कृत्योङ्कारमुभयविभागशून्यं

युञ्जीत प्रणवे चेतः प्रणवो ब्रह्म निर्भयम्।
प्रणवे नित्ययुक्तस्य न भयं विद्यते क्वचित् ॥२५
प्रणवो ह्यपरं ब्रह्म प्रणवश्च परः स्मृतः ।

---

युञ्जीत समादध्यात् यथा व्याख्याते परमार्थरूपे प्रणवे चेतो मनो यस्मात्प्रणवो ब्रह्म निर्भयम् । न हि तत्र सदा युक्तस्य भयं विद्यते क्वचिद्विद्वान्न बिभेति कुतश्चनेति श्रुतेः ॥२५॥

परापरे ब्रह्मणी प्रणवः परमार्थतः क्षीणेषु माता-पादेषु पर एवात्मा ब्रह्मेति न पूर्वं कारणमस्य विद्यत इत्यपूर्वः । नास्यान्तरं भिन्नजातीयं किञ्चिद्विद्यत इत्य-

---

ब्रह्मबुद्ध्या जानीयादित्याह । ओङ्कारमिति ॥ उत्तरार्द्धस्य तात्पर्य्यमाह । एवमिति ॥ २४ ॥

प्रणवानुसन्धानकुशलस्य प्रणवज्ञानेनैव सर्व्वद्वैतापवादकेन कृतार्थता भवतीत्युक्तम् । इदानीं तदनभिज्ञस्य परोपदेशमात्रशरणस्य ध्यानकर्त्तव्यतां कथयति । युञ्जीतेति । ननु मनसः समाधानं ब्रह्मणि कर्त्तव्यं किमिति प्रणवे तत्कर्त्तव्यतोच्यते तत्राह । प्रणव इति ॥ सम्प्रति प्रणवे समाहितचित्तस्य फलं दर्शयति । प्रणवे नित्ये इति ॥ समाधानविषयमाह । यथेति ॥ तुरीयरूपं यथोच्यते तत्र हेतुमाह । यस्मादिति ॥ तदेव साधयति । न हीति ॥ तत्र तैत्तिरीयकश्रुत्याऽऽनुकूल्यमाह । विद्वानिति ॥२५॥

कीदृशस्तर्हि प्रणवो मन्दानां मध्यमानाञ्चाधिकारिणां ध्येयो भवतीत्याशङ्कयाह । प्रणवे हीति ॥ उत्तमाधिकारिणां कीदृशस्तर्हि प्रणवः सम्यग्ज्ञानगोचरो भवति तत्राह । पूर्व्व इति ॥ परापरब्रह्मा-]

अपूर्वोऽनन्तरो वाह्यो न परः प्रणवोऽव्ययः॥२६॥

सर्व्वस्य प्रणवो ह्यादिर्मध्यमान्तस्तथैव च।
एवं हि प्रणवं ज्ञात्वा व्यश्नुते तदनन्तरम्॥२७॥

---

नन्तरः। तथा वाह्यमन्यन्न विद्यत इत्यवाह्यः। अपरं कार्य्यमस्य न विद्यत इत्यनपरः। स वाह्याभ्यन्तरो ह्यजः सैन्धवघनवदित्यर्थः॥२६॥

आदिमध्यान्ता उत्पत्तिस्थितिप्रलयाः। सर्व्वस्यैव मायाहस्तिरज्जुसर्पमृगतृष्णिकास्वप्नादिवदुत्पद्यमानस्य वियदादिप्रपञ्चस्य यथा मायाव्यादयः एवं हि प्रणवमात्मानं मायाव्यादिस्थानीयं ज्ञात्वा तत्क्षणादेव व्यश्नुत इत्यर्थः॥२७॥

---

त्मना प्रणवो मन्दमध्यमाधिकारिणोर्ध्येयतामुपगच्छतीति पूर्व्वार्द्धं व्याचष्टे। परेति। उत्तमाधिकारिणस्तु सर्वविशेषशून्यमेकरसं प्रत्यगभूतं यद्ब्रह्म तद्रूपेण प्रणवः सम्यगज्ञानाधिगम्यो भवतीत्युत्तरार्द्धं विभजते परमार्थेत इत्यादिना॥ उक्तेऽर्थे प्रमाणं सूचयति। सवाह्येति॥२६॥

यथोङ्कारस्य प्रत्यगात्मत्वमापन्नस्य तुरीयस्यापूर्व्वत्वमनन्तरत्वमित्यादिविशेषणमुक्तं तत्र हेतुमाह। सर्व्वस्येति॥ यथोक्तविशेषणं प्रणवं प्रत्यञ्चं प्रतिपद्य कृतकृत्यो भवतीत्याह। एवं हीति॥ पूर्व्वार्द्धं व्याकरोति। आदीति॥ सर्व्वस्यैवोत्पद्यमानस्योत्पत्तिस्थितिलया यथोक्तप्रणवाधीना भवन्ति। अतस्तस्योक्तं विशेषणं युक्तमित्यर्थः॥ तत्र परिणामवादं व्यावर्त्य विवर्त्तवादं द्योतयितुमुदाहरति। मायेति॥

प्रणवं हीश्वरं विद्यात्सर्व्वस्य हृदि संस्थितम् । सर्वव्यापिनमोङ्कारं मत्वा धीरो न शोचति ॥२८॥

---

सर्व्वप्राणिजातस्य स्मृतिप्रत्ययास्पदे हृदये स्थितमीश्वरं प्रणवं विद्यात्सर्व्वव्यापिनं व्योमवदोङ्कारमात्मानमसंसारिणं धीरो बुद्धिमान् मत्वा न शोचति । शोकनिमित्तानुपपत्तेः । तरति शोकमात्मविदितिश्रुतिभ्यः ॥२८॥

---

अनेकोदाहरणमुत्पद्यमानस्यानेकविधत्वबोधनार्थं प्रणवस्य प्रत्यगात्मत्वप्राप्तस्याविकृतस्यैव स्वमायाशक्तिवशाज्जगद्धेतुत्वमित्यत्र दृष्टान्तमाह। यथेति ॥ यथा मायावी स्वगतविकारमन्तरेण मायाहस्त्यादेरिन्द्रजालस्य स्वमायावशादेव हेतुः । यथा वा रज्ज्वादयः स्वगतविकारविरहिणः स्वाज्ञानादेव सर्पादिहेतवस्तथाऽयमात्मा प्रणवभूतो व्यवहारदशायां स्वाविद्यया सर्व्वस्य हेतुर्भवति । अतो युक्तं तस्य परमार्थावस्थायां पूर्व्वोक्तविशेषणवत्त्वमित्यर्थः ॥ द्वितीयार्द्धं विभजते । एवं हीति ॥ पूर्वोक्तविशेषणसम्पन्नमिति यावत् । ज्ञानस्य मुक्तिहेतोः सहायान्तरापेक्षा नास्तीति सूचयति । तत्क्षणादेवेति ॥ सदात्मभावमित्यत्र तच्छब्देनापूर्वादिविशेषणं परमार्थवस्तु परामृश्यते ॥२७॥

सर्व्वबुद्ध्या प्रणवमिति ध्यायतो हृदयाख्यं देशमुपदिशति । प्रणवमिति ॥ परमार्थदर्शिनस्तु देशाद्यनवच्छिन्नवस्तुदर्शनादार्थिकशोकभावं तत्र को मोहः कः शोक इत्यादिश्रुति सिद्धमनुवदति । सर्वव्यापिनमिति ॥ हृदयदेशे प्रणवभूतस्य ब्रह्मणो ध्येयत्वे हेतुं सूचयति स्मृतिप्रत्ययेति ॥ बुद्धिमानिति विवेकित्वमुच्यते । मत्वेति साक्षात्कारसम्पत्तिर्विवक्ष्यते । विवेकद्वारा तत्त्वसाक्षात्कारे सति शोकनिवृत्तौ

अमात्रोऽनन्तमात्रश्च द्वैतस्योपशमः शिवः।
ओङ्कारो विदितो येन स मुनिर्नेतरोजनः
॥२९॥

---

अमात्रस्तुरीय ओङ्कारो मीयतेऽनयेति मात्रापरिच्छित्तिः सा अनन्ता यस्य सोऽनन्तमात्रः। नैतावत्त्वमस्य परिच्छेत्तुं शक्यत इत्यर्थः। सर्वद्वैतोपशमत्वादेव शिवः। ओङ्कारो यथा व्याख्यातो विदितो येन स परमार्थतत्त्वस्य मननान्मुनिः। नेतरो जनः शास्त्रविदपीत्यर्थः॥ २९॥

---

हेतुमाह। शोकेति॥ तस्य हि निमित्तमात्माज्ञानम्। तस्यात्मसाक्षात्कारतो निवृत्तौ शोकानुपपत्तिरित्यत्र प्रमाणमाह। तरतीति॥ आदिशब्देन भिद्यते हृदयग्रन्थिरित्यादिश्रुतिर्गृह्यते॥२८॥

ओङ्कारं तुरीयभावमापन्नो यः प्रतिपन्नस्तं स्तौति॥ अमात्र इति॥ यथोक्तप्रणवप्रतिपत्तिविहीनस्तु जननमरणमात्रभागी न पुरुषार्थभाग्भवतीति विद्यारहितं निन्दति। नेतर इति। यावदविभागस्य मात्राविभागस्य चाभावादोङ्कारस्तुरीयः सन् मात्रो भवतीत्याह। अमात्र इति॥ ननु कथमनन्तापरिच्छित्तिरोङ्कारस्य तुरीयस्योच्यते। न हि तत्र परिच्छित्तिरेयात्तीत्याशङ्क्याह॥ नैतावत्त्वमिति॥ अनर्थात्मकद्वैतसंस्पर्शाभावादप्रतिबन्धेन परमानन्दत्वं तस्मिन्नाविर्भवतीत्यभिप्रेत्याह। सर्वेति॥ यथा व्याख्यातः पूर्वार्द्धेनोक्तविशेषणमित्यर्थः। ननु यथोक्तप्रणवपरिज्ञानरहितस्यापि शास्त्रपरिज्ञानवत्त्वाज्जन्मोपसञ्चितसंसारभाजो न पुरुषार्थासिद्धिः। मैवम् शास्त्रविदोऽपि तत्त्वज्ञानाभावे मुख्यपुरुषार्थासिद्धेरित्यभिप्रेत्याह। नेतर इति॥ तदेवं प्रणवद्वारेण निरूपाधिकमात्मानमनुसन्दधानस्य पुरुषार्थपरिसमाप्तिर्नेतरेषां बहिर्मुखानामिति स्थितम्॥२९॥

इति माण्डूक्योपनिषदर्थाविष्करणपरायां गौडपादीयकारिकायां प्रथममागमप्रकरणम् ॥ ओं तत्सत् ॥

इति श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य परमहंस परिव्राजकाचार्य्यस्य शङ्करभगवतः कृतावागमशास्त्रविवरणे गौड़पादीयकारिकासहितमाण्डूक्योपनिषद्भाष्ये प्रथममागमप्रकरणं सम्पूर्णम् ॥ ओं तत्सत् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्य्य श्रीशुद्धानन्दपादपूज्य-शिष्यभगवदानन्दज्ञानविरचितायां माण्डूक्योपनिषदाविष्करणपर-गौडपादीयकारिकाभाष्यटीकायां प्रथममागमप्रकरणं सम्पूर्णं ॥ ओं तत्सत् ॥१॥

## अथ गौडपादीयकारिकायां वैतथ्याख्यं द्वितीयं प्रकरणम् ॥

हरिः ओं ॥

वैतथ्यं सर्वभावानां स्वप्न आहुर्मनी-

---

ओं ॥ ज्ञाते द्वैतं न विद्यत इत्युक्तम् । एकमेवाद्वितीयमित्यादिश्रुतिभ्यः । आगममात्रं तत्तत्रोपपत्त्यापि द्वैतस्य वैतथ्यं शक्यतेऽवधारयितुमिति द्वितीयं प्रकरणमारभ्यते । वैतथ्यमित्यादिना । वितथस्य भावो वैतथ्यं असत्यत्वमित्यर्थः । कस्य । सर्वेषां बाह्याध्यात्मिकानां भावानां पदार्थानां स्वप्न उपलभ्यमानानामाहुः कथयन्ति मनीषिणः प्रमाणकुशलाः । वैतथ्ये हेतुमाह । अन्तःस्थानात् । अन्तःशरीरस्य मध्ये स्थानं येषाम् । तत्र हि भावा उपलभ्यन्ते पर्वतहस्त्यादयो न बहिः शरीरात् ।

---

ओं ॥ आगमप्राधान्येनाद्वैतं प्रतिपादयता तत्प्रत्यनीकस्य द्वैतस्य मिथ्यात्वमर्थादुक्तं इदानीं तन्मिथ्यात्वमुपपत्तिप्राधान्येनापि प्रतिपत्तुं शक्यमिति दर्शयितुं प्रकरणान्तरमवतारयन्नादौ दृष्टान्तसिध्यर्थं तस्मिन् हेतुसम्पत्तिमाह । वैतथ्यमिति ॥ न केवलमाप्तोक्तिवशादेव स्वप्नमिथ्यात्वं किन्तु युक्तितोऽपीत्याह । अन्तःस्थानादिति ॥ पूर्वोत्तरप्रकरणयोः सम्बन्धसिध्यर्थं प्रकरणे वृत्तं सङ्कीर्त्यानुवदति । ज्ञात इति ॥ आदिशब्देन यत्र हि द्वैतमिव भवतीत्यादिश्रुतिरुच्यते । तर्हि द्वैतमिथ्यात्वस्य प्रागेव सिद्धत्वादुत्तरं प्रकरणमनर्थकमित्याशङ्क्याह । आगमेति ॥ यद्द्वैतमिथ्यात्वं पूर्वमुक्तं तदागममात्रं

षिणः । अन्तःस्थानात्तु भावानां संवृतत्वेन हेतुना॥ १ ॥

---

तस्मात्ते वितथा भवितुमर्हन्ति । ननु अपवरकाद्यन्तरुप-लभ्यमानैर्घटादिभिरनैकान्तिको हेतुरित्याशङ्क्याह । संवृतत्वेन हेतुनेति । अन्तः संवृतस्थानादित्यर्थः न ह्यन्तः संवृते देहान्तर्नाडीषु पर्वतहस्त्यादीनां भावोऽस्ति। नहि देहे पर्वतोऽस्ति॥१॥

---

आगमप्राधान्येनानुगतं न युक्तितः सिद्धम् । तस्मिन्नागमतोऽवगते युक्तिप्राधान्येनापि तन्मिथ्यात्वमवगन्तव्यमिति प्रकरणान्तरं प्रारब्ध-मित्यर्थः । प्रमाणानुग्राहकत्वात्तर्कस्यानुग्राह्यप्रमाणस्य प्रधानत्वात्त-दधीनविचारानन्तरं तर्काधीनविचारस्य सावकाशत्वाद्युक्तं पौर्वा-पर्यं पूर्वोत्तरप्रकरणयोरित्युक्तम्॥ सम्प्रति श्लोकाक्षराणि योजयति । वितथस्येत्यादिना ॥ बाह्या घटादयः । सुखादयस्त्वाध्यात्मिका भावाः॥ शरीरान्तरवस्थानं स्वाप्नानां भावानामित्यात्मानुभवं प्रमाणयति । तत्र हीति ॥ तेषामन्तरुपलभ्यमानत्वेऽपि न वैतथ्यं व्यभिचारादित्या-शङ्कामनूद्य परिहरति । नन्वित्यादिना ॥ हेत्वन्तरशङ्कां वारयति । अन्तरिति । यद्यपि देहान्तःसङ्कुचिते देशे स्वाप्ना भावा भवन्ति तथापि कथं तेषां स्वप्नात्मत्वमित्यत आह । न हीति ॥ अन्तरित्युक्तं स्फुटयति । संवृत इति ॥ तमेव सङ्कुचितं देशविशेषं व्यान्तरं स्फोरयति । देहा-न्तर्नाडीष्विति ॥ उक्तमर्थं कैमुतिकन्यायेन स्फुटयति । न हीति यदा देहेऽपि पर्वतादयो न सम्भाव्यन्ते तदा तदन्तर्वर्तिनीषु नाडीषु अति सूक्ष्मासु तेषां सम्भावना नास्तीति किमु वक्तव्यमित्यर्थः । स्वाप्नाभावाः सत्या न भवन्ति । उचितदेहशून्यत्वाद्व्रजतसु जङ्गादिवदिति भावः ॥ १ ॥

**अदीर्घत्वाच्च कालस्य गत्वा देशान्न**

स्वप्नदृश्यानां भावानामन्तः संवृतस्थानमित्येतत्सिद्धम्। यस्मात्प्राच्येषु सुप्त उदक्षु स्वप्नान् पश्यन्निव दृश्यते इत्येतदाशङ्क्याह। न देहाद्बहिर्देशान्तरं गत्वा स्वप्नान् पश्यति। यस्मात्सुप्तमात्र एव देहदेशाद्योजनशतान्तरिते मासमात्रप्राप्ये देशे स्वप्नान् पश्यन्निव दृश्यते। न च तद्देशप्राप्तेरागमनस्य च दीर्घः कालोऽस्ति अतो दीर्घत्वाच्च कालस्य न स्वप्नदृग्देशान्तरं गच्छति। किञ्च प्रतिबुद्धश्च वै सर्व्वः स्वप्नदृक् स्वप्नदर्शनदेशे न विद्यते। यदि च स्वप्ने देशान्तरं गच्छेत् यस्मिन् देशे स्वप्नान् पश्येत् तत्रैव प्रतिबुध्येत। नचैतदस्ति। रात्रौ

---

देहाद्बहिरेव देशान्तरं गत्वा स्वप्नानाम्भावानामुपलम्भात्तेषां देहान्तः संवृते नाड़ीप्रदेशे दर्शनमसम्प्रतिपन्नमित्याशङ्क्य परिहरति। अदीर्घत्वाच्चेति॥ बहिः स्वप्नोपलब्धिपक्षे दोषान्तरमाह। प्रतिबुद्धश्चेति॥ व्याख्येयामाशङ्कामनुवदति। स्वप्नेति। तेषां देहान्तःसङ्कुचिते नाड़ीदेशे स्थितिदर्शनान्मिथ्यात्वमित्येतदपि असम्प्रतिपन्नमित्यत्र हेतुमाह। यस्मादिति। पश्यन्निवेति स्वप्नदर्शनस्य निरूपणे सत्याभासत्वमिवशब्देन द्योत्यते। एतच्छब्देन चोद्यं परामृश्यते। स्वप्नद्रष्टा गत्वा स्वप्नान्न पश्यतीत्यत्र हेतुमाह। यस्मादिति॥ इवशब्दस्तु पूर्व्ववत्। तथापि कथं बहिः स्वप्नोपलम्भो न भवतीति निर्द्धारितमित्याशङ्क्याह। नचेति॥ स्वप्नः सत्यो न भवति उचितकालविकलत्वात् सम्प्रतिपन्नवदित्यभिप्रेत्य फलितमाह। अत इति। इतश्च न देहाद्बहिर्देशान्तरे स्वप्नदर्शनमित्याह। किञ्चेति सर्व्वोऽपि स्वप्नद्रष्टा देशान्तरे स्वप्नान् पश्यन्नकस्मादेव प्रतिबुद्धो न तत्रास्ति किन्तु शयनदेशे वर्त्तते

पश्यति । प्रतिबुद्धश्च वै सर्व्वस्तस्मिन् देशे न विद्यते ॥ २ ॥

अभावश्च रथादीनां श्रूयते न्यायपूर्व्वकम् ।

---

सुप्तोऽहनि इव भावान् पश्यति बहुभिः सङ्गतो यैश्च सङ्गतो भवति तैर्गृह्येत ॥ न च गृह्यते । गृहीतश्चेत् त्वामद्य तत्रोपलब्धवन्तो वयमिति ब्रूयुः । नचैतदस्ति । तस्मान्न देशान्तरं गच्छति स्वप्ने ॥२॥

इतश्च स्वप्नदृश्या भावा वितथाः । यतो ऽभावश्चैव रथादीनां स्वप्नदृश्यानां श्रूयते न्यायपूर्व्वकं युक्तितः श्रुतौ

---

तथापि गत्वा स्वप्नदर्शने कानुपपत्तिरित्याशङ्क्याह । यदि चेति ॥ अन्तरेव स्वप्नदर्शनमिति स्थिते स्वप्नमिथ्यात्वमुचितकालशून्यत्वादित्युक्तं प्रपञ्चयति । रात्राविति ॥ यद्यपि रात्रौ निद्रामुपगतस्तथापि भावानहनि पश्यन्निव तिष्ठति सुप्तः संहृतचक्षुरादिकरणोऽपि पश्यति । शयानोऽपि पर्य्यटनं प्रतिपद्यते । यद्यपि सहायविहीनः सुप्तस्तथापि बहुभिः सहायः स्वप्नानुपलभ्यते । तस्मादुचितस्य कालस्य करणस्य सहकारिणश्चाभावेऽपि स्वप्नदर्शनात्तस्मिन्मिथ्यात्वं सिद्धमित्यर्थः । स्वप्नमिथ्यात्वे हेत्वन्तरमाह । यैश्चेति ॥ सहदर्शिभिरगृह्यमाणत्वं स्वप्नद्रष्टुरसम्प्रतिपन्नमित्याशङ्क्याह । गृहीतश्चेदिति ॥ पुरुषान्तरसंवादादर्शनात्तद्देशान्तरप्राप्तिद्वारा स्वप्नदर्शनमिति वक्तुमशक्यत्वादन्तरेव स्वप्नदर्शनमित्युचितदेशकालाद्यभावात्तन्मिथ्यात्वं सिद्धमित्युपसंहरति । तस्मान्नेति ॥ २ ॥

स्वप्नदृश्यानां भावानां मिथ्यात्वे हेत्वन्तरमाह । अभावश्चेति ॥ न तत्र रथा न रथयोगा न पन्थानो भवन्तीत्यादिश्रुत्या स्वप्ने स्वयं ज्योतिष्ट्वमात्मनो दर्शयन्त्या तत्र दृश्यानां रथादीनामभावो योग्यदे-

वैतथ्यं तेन वै प्राप्तं स्वप्न आहुः प्रकाशितम् ॥३॥

---

न तत्र रथा इत्यत्र तेनान्तःस्थानसंवृतत्वादिहेतुना प्राप्तं वैतथ्यं तदनुवादिन्या श्रुत्या स्वप्ने स्वयं ज्योतिष्ट्वप्रतिपादनपरया प्रकाशितमाहुर्ब्रह्मविदः ॥३॥

---

शाद्यभावद्योतकन्यायपुरःसरं श्रूयते । अतस्तेन न्यायेन प्राप्तमेव स्वप्नदृश्यभावानामस्ति मिथ्यात्वमन्यपरया श्रुत्या प्रकाशितमिति ब्रह्मविदो वदन्ति । तथा च स्वप्ने भावानां मिथ्यात्वं श्रुतियुक्तिभ्यां सिद्धमित्यर्थः॥ हेत्वन्तरपरत्वं श्लोकस्य दर्शयति । इतश्चेति ॥ इतःशब्दार्थमेव स्फुटयति । यत इति ॥ ज्ञेयाभावे ज्ञानाभावाद्बीजज्ञानस्यापि श्रुतमसत्त्वमिति वक्तुं चशब्दः । श्रूयते न तत्रेत्याद्यायां श्रुताविति सम्बन्धः ॥ न्यायपूर्व्वकमिति व्याचष्टे । युक्तित इति ॥ योग्यदेशाद्यभावो युक्तिः ॥ तर्हि न्यायसिद्धेऽर्थे किमन्यपरया श्रुत्या क्रियते तत्राह । तेनेति ॥ अन्तःशरीरमध्यस्थानं नाड़ीलक्षणम् । तत्रातिसूक्ष्मे संवृतत्वेन सङ्कुचितत्वेनावस्थानं पर्व्वतादीनामुपलभ्यते । ततश्चोचितदेशाभावो योग्यकालाभावश्चेत्यादिना प्रागुक्तेन हेतुना प्राप्तं स्वप्नदृश्यानां भावानां वैतथ्यं तदेव तदनुवादिन्या श्रुत्यापि प्रकाशितमित्याहुर्ब्रह्मविदः । जाग्रदवस्थायामादित्यादिप्रकाशानां वागादिज्योतिषां च विद्यमानत्वादासनादिव्यवहारस्य तन्निमित्तत्वसम्भवादात्मचैतन्यनिबन्धनो व्यवहारो न निर्द्धारयितुं शक्यते स्वप्ने पुनः सूर्य्याद्यभावेऽपि व्यवहारदर्शनात्तस्य च निमित्तापेक्षत्वादात्मचैतन्यस्य तन्निमित्तत्वनिर्णयात्तत्रात्मनः स्वयं ज्योतिष्ट्वं प्रतिपादयितुं न तत्रेत्याद्या श्रुतिः । तया तत्परया न्यायसिद्धं स्वप्नमिथ्यात्वमनुवदन्त्या तदप्रतिपादितमपि प्रकाशितमिष्यते । तथा च श्रुतियुक्तिभ्यां प्रतिपन्नं स्वप्नमिथ्यात्वमिति दृष्टान्तसिद्धिरित्यर्थः ॥३॥

अन्तःस्थानात्तु भेदानां तस्माज्जागरिते स्मृतम् । यथा तत्र तथा स्वप्ने संवृतत्वेन भिद्यते ॥४॥

---

जाग्रद्दृश्यानां भावानां वैतथ्यमिति प्रतिज्ञा दृश्यत्वादिति हेतुः स्वप्नदृश्यभाववदिति दृष्टान्तः । यथा तत्र स्वप्ने दृश्यानां भावानां वैतथ्यं तथा जागरितेऽपि दृश्यत्वमविशिष्टमिति हेतूपनयः । तस्माज्जागरितेऽपि वैतथ्यं स्मृतमिति निगमनम् । अन्तःस्थानात्संवृतत्वेन स्वप्नदृश्यानां भावानां जाग्रद्दृश्येभ्यो भेदः । दृश्यत्वमसत्यत्वञ्चाविशिष्टमुभयत्र ॥४॥

---

उक्तन्यायेन दृष्टान्ते सिद्धे फलितमनुमानमाह । अन्तःस्थानादिति भेदानामित्यत्र सूचितमनुमानमारचयति । जाग्रदिति तृतीयेन पादेन पक्षधर्म्मत्वं व्याप्तस्य हेतोरुच्यते तद्दर्शयति यथेति ॥ द्वितीयेन पादेन प्रतिकूलप्रमाणाभावसूचकं प्रतिज्ञोपसंहारवचनं निगमनं सूचितमित्याह । तस्मादिति ॥ सर्व्वद्वैतवैतथ्यवादिनां केन विशेषेण पक्षसपक्षविभागसिद्धिरित्याशङ्क्यान्तःस्थानात्तु संवृतत्वेन भिद्यत इत्यत्र विवक्षितमर्थमाह । अन्तःस्थानादिति ॥ स्वप्नदृश्यानामन्तःस्थानं संवृतत्वञ्च न तथा जाग्रद्दृश्यानां तेनोचितदेशाद्यभावात्तेषां तेभ्यो वैषम्यं स्फुटम् । सिद्धं हि योग्यदेशाद्यभावेन स्वप्नस्य मिथ्यात्वमिति सपक्षत्वम् । जागरितस्य पुनरुचितदेशादिसद्भावादस्फुटमिथ्यात्वमिति पक्षत्वमित्यर्थः । तर्हि सर्व्वथा वैषम्याद्दृष्टान्तदार्ष्टान्तिकभावासिद्धिरित्याशङ्क्याह । दृश्यत्वमिति ॥४॥

स्वप्नजागरिते स्थाने ह्येकमाहुर्मनीषिणः
भेदानां हि समत्वेन प्रसिद्धेनैव हेतुना ॥५॥
आदावन्ते च यन्नास्ति वर्त्तमानेऽपि तत्तथा।

---

प्रसिद्धेनैव भेदानां ग्राह्यग्राहकत्वेन हेतुना समत्वेन स्वप्नजागरितस्थानयोरैक्यत्वमाहुः । विवेकिन इति । पूर्व्वप्रमाणसिद्धस्यैव फलम् ॥५॥

इतश्च वैतथ्यं जाग्रद्दृश्यानां भेदानामाद्यन्तयोरभावात् यदादावन्ते च नास्ति वस्तु मृगतृष्णिकादि तन्मध्येऽपि नास्तीति निश्चितं लोके। तथेमे जाग्रद्दृश्या भेदाः।

---

स्वप्नवज्जागरितस्य मिथ्यात्वे स्वप्ननिद्रायुतावित्यादौ जागरिते स्वप्नशब्दप्रयोगो युक्तो भवतीत्याह। स्वप्नेति ॥ उभयत्रैकत्वं विद्वदभिमतमित्यत्र हेतुमाह। भेदानामिति ॥ भेदा भिद्यमाना भावास्तेषामवस्थाद्वयवर्त्तिनां ग्राह्यत्वं ग्राहकत्वमविशिष्टम्। तेन हस्वत्वेन हेतुना प्रसिद्धमेव तेषां मिथ्यात्वं समत्वं तेन स्थानयोरेकरूपत्वं विवेकिनामभिप्रेतमिति यत्पूर्व्वमनुमानाख्यं प्रमाणं सिद्धं तस्यैव फलं साधमस्यानद्वयाविशेषरूपमनेन श्लोकेनोक्तमिति श्लोकयोजनया दर्शयति। प्रसिद्धेनैवेति ॥५॥

जाग्रद्दृश्यानां भावानां मिथ्यात्वमित्यत्रानुमानान्तरमाह। आदाविति ॥ यदि जाग्रद्दृश्या भावा मिथ्यात्वेन प्रसिद्धस्वप्नादिभिः समत्वान्मिथ्या कथं तर्हि तेषां घटः सन् पटः सन्नित्यसद्रूपात्वेन प्रतीतिरित्याशङ्क्याह। वितथैरिति ॥ प्रकृते जाग्रन्मिथ्यात्वे हेत्वन्तरपरत्वं श्लोकस्योपन्यस्यति। इतश्चेति ॥ विमतं मिथ्या आदिमत्त्वादन्तवत्त्वात् स्वप्नादिवदित्यर्थः। उक्तानुमानजङ्गिमे व्याप्तिं कथयति ॥ यदादाविति ॥ यदादिमदन्तवच्च तन्मिथ्या यथा मृगतृष्णिका-

वितथैः सदृशाः सन्तोऽवितथा इव लक्षिताः ॥६॥

सप्रयोजनता तेषां स्वप्ने विप्रतिपद्यते।

आद्यन्तयोरभावाद्वितथैरेव मृगतृष्णिकादिभिः सदृशत्वाद्वितथा एव तथाऽप्यवितथा इव लक्षिता मूढैरनात्मविद्भिः ॥६॥

स्वप्नदृश्यवज्जागरितं दृश्यानामप्यसत्त्वमिति यदुक्तं तदयुक्तम्। यस्माज्जाग्रद्दृश्या अन्नपानवाहनादयः क्षुत्पिपासादिनिवृत्तिं कुर्वन्तः गमनागमनादिकार्य्यं च सप्रयोजना दृष्टाः न तु स्वप्नदृश्यानां तदस्ति तस्मात् स्वप्नदृश्यवज्जाग्रद्दृश्यानामसत्त्वं मनोरथमात्रमिति। तत्कस्मा-

टीकार्थः। व्याप्तिमतः साधनस्य पक्षधर्म्मतोपन्यासेन प्रतिज्ञोपसंहारवचनं निगमनं दर्शयति। तथेति ॥ अनुमानस्य घटादिषु सत्त्वसाधकप्रत्यक्षविरोधमाशङ्क्य सङ्गन्धर्व्वनगरमिति वस्तुस्यापातिकसत्त्वविषयत्वान्मैवमित्याह। तथापीति ॥६॥

स्वप्नस्य मिथ्यात्वमाद्यन्तवत्त्वान्न भवति किन्तु फलपर्य्यन्तत्वाभावा ज्जागरितस्य फलपर्य्यन्तत्वान्न मिथ्यात्वमित्याशङ्क्याह। सप्रयोजनतेति ॥ फलपर्य्यन्ततारहित्योपाधेः साधनव्यापकत्वे फलितमाह। तस्मादिति ॥ जाग्रद्दृश्याभावा वक्तव्या गृह्यन्ते। श्लोकस्य व्यावर्त्तामुपाध्याशङ्कामुत्थापयति। स्वप्नेति ॥ जाग्रद्दृश्यानामिव स्वप्नदृश्यानामपि तुल्यं सप्रयोजनत्वमित्युपाधेरसम्भवत्वमित्याशङ्क्याह। नत्विति ॥ अनुमानस्य सोपाधिकत्वेनासाधकत्वं फलितमाह। तस्मा-

तस्मादाद्यन्तवत्त्वेन मिथ्यैव खलु ते स्मृताः ॥ ७ ॥

अपूर्वं स्थानिधर्मो हि यथा स्वर्गनिवासिनाम्

---

कस्माद्यस्मात्सप्रयोजनता दृष्टा या अन्नपानादीनां सा स्वप्ने विप्रतिपद्यते। जागरिते हि भुक्त्वा पीत्वा चाढ्यो विनिवर्त्तिततृट् सुप्तमात्र एव क्षुत्पिपासाद्यार्त्तमहोरात्रोषितमभुक्तवन्तमात्मानं मन्यते। यथा स्वप्ने भुक्त्वा पीत्वा चाढ्योत्थितस्तथा। तस्माज्जाग्रद्दृश्यानां स्वप्नेऽपि विप्रतिपत्तिर्दृष्टा। अतो मन्यामहे तेषामप्यसत्त्वं स्वप्नदृश्यवदनाशङ्कनीयमिति। तस्मादाद्यन्तवत्त्वमुभयत्र समानमिति मिथ्यैव खलु ते स्मृताः ॥ ७ ॥

स्वप्नजाग्रद्भेदयोः समत्वाज्जाग्रद्भेदानामसत्त्वमिति यदुक्तं तदसत्। कस्मात्। दृष्टान्तस्यासिद्धत्वात्। कथं

---

दिति ॥ हेतोः सोपाधिकत्वं दूषयति। तत्रेति ॥ साधनव्याप्त्यादिदोषाद्दते नोपाधिनिरसनं सुशकमित्याशङ्क्याह। कस्मादिति ॥ फलपर्यन्तताविरहिसोपाधेः साधनव्याप्तिमाह। यस्मादित्यादिना ॥ तामेव विप्रतिपत्तिं प्रकटयति। जागरिते हीति ॥ उक्तमर्थं दृष्टान्तेन स्फुटयति। यथेत्यादिना ॥ उपाधेः साधनव्याप्तिं निगमयति। तस्मादिति ॥ हेतोः सोपाधिकत्वाभावे फलितमाह। अत इति ॥ हेतुद्वयमुपसंहरति तस्मादिति ॥ ७॥

दृष्टान्तस्य साध्यविकलत्वं शङ्कित्वा परिहरति। अपूर्वमिति ॥ यथा स्वर्गनिवसनशीलानामिन्द्रादीनां सहस्राक्षत्वादिधर्म्मास्तथा यदिदमपूर्वं स्वप्नदर्शनं मन्यसे तदपि स्थानिनः स्वप्नस्थानवतो द्रष्टुरेव धर्म्माः। तेन दृष्टत्वात्तस्य मिथ्यात्वसिद्धिरित्यर्थः। कथं तेनैव दृष्टत्वं तत्राह।

तानयं प्रेक्षते गत्वा यथैवेह सुशिक्षितः ॥ ८ ॥

---

नहि जाग्रद्दृष्टा एवैते भेदाः स्वप्ने दृश्यन्ते किन्तर्हि अपूर्वं स्वप्ने पश्यति चतुर्दन्तगजमारूढमष्टभुजमात्मानं मन्यते। अन्यदप्येवंप्रकारमपूर्वं पश्यति स्वप्ने। तन्नान्येनासता समिति सदेवतो दृष्टान्तोऽसिद्धस्तस्मात्स्वप्नवज्जागरितस्यासत्त्वमित्ययुक्तम्। तन्न स्वप्ने दृष्टमपूर्वं यन्मन्यसे नं तत्तु स्वतः सिद्धम्। किन्तर्हि अपूर्वं स्थानिधर्मो हि स्थानिनो द्रष्टुरेव हि स्वप्नस्थानवतो धर्मः। यथा स्वर्गनिवासिनामिन्द्रादीनां सहस्राक्षत्वादि तथा स्वप्नदृशोऽपूर्वोऽयं धर्मः। न स्वतः सिद्धो द्रष्टुः स्वरूपवत्। तानेवं प्रकाशन पूर्वान् स्वचित्तविकल्पानयं स्थानी स्वप्नदृक् स्वप्नस्थानं गत्वा प्रेक्षते। यथैवेह लोके सुशिक्षितो देशान्तरमार्गस्तेन मार्गेण देशान्तरं गत्वा तान् पदार्थान् पश्यति तद्वत्। तस्माद्यथा स्थानिधर्माणां रज्जुसर्पमृगतृष्णिकादीनामसत्त्वं तथा स्वप्नदृश्यानामपूर्वाणां स्थानिधर्मत्वमेवेत्यसत्वम्। अतो न स्वप्नदृष्टान्तस्यासिद्धत्वम् ॥८॥

---

तानयमिति ॥ यथैवेह व्यवहारभूमौ सुशिक्षितो देशान्तरप्राप्तिमार्गस्तेन मार्गेण देशान्तरं गत्वा तत्रतान् पदार्थान् वीक्षते तथाऽयं स्वप्नगतान् पदार्थान् यथोक्तप्रकारान् प्रतिपद्यते। ततश्च स्वप्नस्य स्थानिधर्मत्वाद्रज्जुसर्पादिवन्मिथ्यात्वमित्यर्थः ॥ श्लोकव्यावर्त्त्यामाशङ्कामुपन्यस्यति। स्वप्न इति ॥ असत्त्वमाद्यन्तवत्त्वादि। अनुमानसिद्धस्यार्थस्यानुमानदोषोक्तिमन्तरेणासत्त्वमयुक्तमिति पृच्छति। कस्मादिति ॥ व्याप्तिभूमिं दूषयन् व्याप्तिभङ्गं दोषमाह। दृष्टान्तस्येति ॥ असिद्धत्वं प्रश्नपूर्वकं विशदयति। कथमित्यादिना। अपूर्वं दर्शनमेव विवृणोति।

**स्वप्नवृत्तावपि त्वन्तश्चेतसा कल्पितन्त्वसत् ।**
**वहिश्चेतोगृहीतं सद्दृष्टं वैतथ्यमेतयोः ॥६॥**

---

अपूर्वत्वाशङ्कां निराकृत्य स्वप्नदृष्टान्तस्य पुनः स्वप्नतुल्यतां जाग्रद्भेदानां प्रपञ्चयन्नाह। स्वप्नवृत्तावपि स्वप्नस्थानेऽप्यन्तश्चेतसा मनोरथसङ्कल्पितमसत् सङ्कल्पानन्तरसमकालमेवादर्शनात्तत्रैव स्वप्ने वहिश्चेतसा गृहीतं चक्षुरादिद्वारेणोपलब्धं घटादि सदित्येवमसत्यमिति निश्चितेऽपि सदसद्विभागो दृष्टः। उभयोरप्यन्तर्वहिश्चेतःकल्पितयोर्वैतथ्यमेव दृष्टम् ॥८॥

---

चतुर्दृन्तमिति ॥ अन्यदपि त्रिनेत्रत्वादिदृष्टान्तस्य साध्यविकलत्वे सिद्धे प्रागुक्तानुमानानुपपत्तिरिति फलितमाह। तस्मादिति ॥ दृष्टान्तासिद्धिं दूषयन्ननुमानं साधयति। तन्नेति ॥ तत्किं स्वभावतः सिद्धं परतो वा। नाद्यः। जडस्य तदयोगादित्याह। न तदिति ॥ द्वितीये तन्मिथ्यात्वमित्यभिमेत्य प्रश्नपूर्व्वकमाद्यपादमवतारयति। किन्त्विति॥ तद्गतान्यक्षराणि व्याकरोति। स्थानिन इति ॥ अपूर्व्व स्वप्नदर्शनस्य स्थानिधर्म्मत्वं दृष्टान्तेन साधयति। यथेत्यादिना ॥ अपूर्व्वदर्शनं स्वप्नद्रष्टृधर्म्मोऽपि चैतन्यवत् किं न स्यादित्याशङ्क्य बाधोपलब्धेर्म्मैवमित्याह। न स्वत इति ॥ उत्तरार्द्धं विभजते। तानित्यादिना ॥ अपूर्व्वाणां स्वप्नदृश्यानां स्थानिधर्मत्वेऽपि किमायातमित्याशङ्क्याह। तस्मादिति ॥ स्वप्नदृष्टान्तस्य साध्यविकलत्वाभावं निगमयति। अतो नेति ॥ अपूर्व्वस्यानपूर्व्वस्य वा स्वप्नद्रष्टृधर्मत्वेन तदविद्याविलसितत्वाद्दृष्टान्ते साध्यसम्प्रतिपत्तेस्तथैव जाग्रद्भेदानां मिथ्यात्वं युक्तमित्यर्थः ॥८॥

जाग्रद्दृश्यानां मिथ्यात्वं तेषु सदसद्विभागप्रतिभागविरुद्धमित्याशङ्क्य दृष्टान्तेन समाधत्ते। स्वप्नवृत्ताविति ॥ श्लोकस्य तात्पर्य्यार्थमाह। अपूर्व्वत्वेति ॥ स्वप्नदृष्टान्तस्यापूर्व्वदर्शनत्वप्रयुक्तां साध्यविकलत्वशङ्कां

जाग्रद्वृत्तावपि त्वन्तश्चेतसा कल्पितन्त्वसत् ।
बहिश्चेतो गृहीतं सद्युक्तं वैतथ्यमेतयो ॥१०॥

उभयोरपि वैतथ्यं भेदानां स्थानयोर्यदि।
क एतान् बुध्यते भेदान् को वै तेषां विकल्पकः ॥११॥

---

सद्वस्तोर्वैतथ्यं युक्तम्। अन्तर्बहिश्चेतःकल्पितत्वा॰ विशेषादिति व्याख्यातमन्यत् ॥१०॥

चोदकस्याह। स्वप्नजाग्रत्स्थानयोर्भेदानां यदि वैतथ्य क एतानन्तर्बहिश्चेतःकल्पितान् बुध्यते। को वै तेषां विकल्पकः। स्मृतिज्ञानयोः क आलम्बइत्यभिप्रायः। न चेन्निरात्मवाद इष्टः ॥११॥

---

परिच्छिन्नत्वेति यावत्। स्वप्नस्थाने सर्वस्य मिथ्यात्वाविशेषेऽपीत्यर्थः। असत्त्वं परमार्थतद्विलक्षणत्वेन मिथ्यात्वम्। तत्रापि तर्हि विभागप्रतिभासविरोधात्कुतो मिथ्यात्वमित्याशङ्क्य बाधाविशेषादित्याह। उभयोरिति ॥९॥

दार्ष्टान्तिकमाह। जाग्रदिति॥ युक्तत्वे हेतुमाह। अन्तरिति॥ श्लोकस्थानामक्षराणां व्याख्यानमनोपेक्षितं व्याख्यातप्रायत्वादित्याह व्याख्यातमिति ॥१०॥

सर्वमिथ्यात्वे प्रमातृप्रमाणादिव्यवहारानुपपत्त्या विशेषमाशङ्कते। उभयोरिति॥ कर्त्तृकरणव्यवस्थानुपपत्त्या विरोधोऽस्तीत्याह। को वा इति॥ विकल्पको निर्म्मातेति यावत्। श्लोकस्य चोद्यपरत्वं प्रतिजानीते। चोदकइति॥ अक्षरयोजनया प्रथमा-

कल्पयत्यात्मनात्मानमात्मदेवः स्वमायया ।
स एव बुध्यते भेदानिति वेदान्तनिश्चयः ॥ १२ ॥

---

स्वयं स्वमायया स्वमात्मानमात्मा देव आत्मन्येव वक्ष्यमाणं भेदाकारं कल्पयति रज्ज्वादाविव सर्पादीन् । स्वयमेव च तान् बुध्यते भेदान् तद्वदेवेत्येवं वेदान्तनिश्चयः ॥ नाऽन्योऽस्ति ज्ञानस्मृत्याश्रयः । नच निरास्पदे एव ज्ञानस्मृती वैनाशिकानामिवेत्यभिप्रायः ॥ १२ ॥

---

र्थापत्तिविरोधं स्फोरयति । स्वप्नेति ॥ चतुर्थपादमवतार्यार्थापत्त्यन्तरविरोधं स्फुटयति । को वै तेषामिति ॥ कर्त्ता हि पूर्वानुवृत्तं स्मृत्वा तज्जातीयान् निर्मिमीतेऽनुस्मृत्यनुभवाश्रयाचेपेण कर्त्ताच्चेपो विवचितस्तया च कर्त्रादिव्यवहारानुपपत्तिः सर्वमिथ्यात्वे दुर्वारेत्यर्थः ॥ योऽध्यात्मं प्रमाता यश्चाधिदैवं कर्त्तेश्वरस्तावुभावपि मिथ्येत्यङ्गीकारात् प्रमात्रादेरसत्त्वमित्याशङ्क्याह । न चेदिति ॥ यदि प्रमाता कर्त्ता वा नेष्यते तर्हि नैरात्म्यमिष्टमेवापद्यते । न च तद्द्रष्टुं शक्यते आत्मनि करणस्य दुष्करत्वान्निराकर्त्तुरेवात्मत्वादित्यर्थः ॥ ११ ॥

कर्त्तृकार्य्यादिव्यवस्थानुपपत्तिं परिहरति । कल्पयतीति ॥ करणान्तरं व्यवच्छिनत्ति । आत्मनेति ॥ कर्म्मान्तरं व्यावर्त्तयति । आत्मानमिति ॥ कर्त्रन्तरं निवारयति । आत्मेति ॥ तस्य द्योतकान्तरापेक्षां प्रतिक्षिपति । देव इति ॥ विवर्त्तवादं द्योतयति । स्वमाययेति ॥ सर्वस्य मिथ्यात्वेऽपि मायया विकल्पितभेदानुरोधेन कर्त्तृत्वादिव्यवहारस्य सिद्धप्रतीति भावः । प्रमातृप्रमाणादिव्यवहारानुपपत्तिं प्रत्याह । स एवेति ॥ एकस्मिन्नेवाद्वितीये प्रतीचि वस्तुनि काल्पनिकभेदनिबन्धना सर्वे व्यवस्थेत्यत्र प्रमाणमाह । इति वेदान्तेति ॥ यथा घटस्रष्टा कुलालोऽधिष्ठाता स्रष्टोऽन्यो दृष्टो न तथेहान्योऽधिष्ठातास्तीत्याह ।
[illegible]

विकरोत्यपरान् भावानन्तश्चित्ते व्यवस्थि-
तान्। नियतांश्च वहिश्चित्त एवं कल्पयते-
प्रभुः ॥१३॥

सङ्कल्पयन् केन प्रकारेण कल्पियतीत्युच्यते। विक-
रोति नाना करोत्यपरान् लौकिकान् भावान् पदार्थान्
शब्दादीनन्यांश्चान्तश्चित्ते वासनारूपेण व्यवस्थितानव्या-
कृतान्नियतांश्च पृथ्व्यादीन् अनियतांश्च कल्पनाकालान्
वहिश्चित्तः सन्। तथाऽन्तश्चित्तो मनोरथादिलक्षणा-
नित्येवं कल्पयति प्रभुरीश्वर आत्मेत्यर्थः ॥१३॥

त्वान्यदुपादानमस्तीत्याह। स्वमात्मानमिति॥ तत्र च घटं कुर्वतो भूभागो भवत्याधारस्तथेहाधारोऽन्योऽस्तीत्याह। आत्मन्येवेति॥ परिणामवादं व्यावर्त्त्य विवर्त्तवादं प्रकटयितुं स्वमाययेत्युक्तं तत्र दृष्टान्तमाह। रज्ज्वादाविति॥ मायाद्वारेण चिदात्मनो जगन्निर्मातृत्वमुक्ता तस्यैव बुद्धिप्रतिबिम्बितस्य प्रमातृत्वमित्याह। स्वयमेव चेति॥ न च प्रमातृत्वस्य तात्त्विकं रज्ज्वादौ सर्पादिदर्शनवदेव मिथ्यात्वनिर्द्धारणादित्याह। तद्वदिति॥ कर्त्रादिभेदस्य प्रमाणादिभेदस्य च मिथ्यात्वे नेह नानास्तीत्यादिश्रुतिं प्रमाणयति। इत्येवमिति॥ स एवेत्येवकारार्थमाह। नान्योऽस्तीति॥ यो जगत्स्रष्टा यश्च प्रमाता ततोऽन्यज्ज्ञानस्य स्मृतेश्चाश्रयो नास्ति। चेतनभेदेमानष्टाभावादनुभवस्मृत्योश्चैकाश्रयत्वस्य प्रसिद्धत्वादित्यर्थः। ज्ञानस्मृत्योराश्रयापेक्षा विषयापेक्षा या नास्तीत्याशङ्क्याबाधितप्रसिद्धिविरोधान्मैवमित्याह। न चेति॥१२॥

प्रकृतायां कल्पनायां विवक्षितं क्रममुपन्यस्यति। विकरोतीति॥ नियतांश्चेति चकारादनियतांश्चेति विवक्ष्यते। प्रतिपिपित्सितं क्रमप्रतिपत्त्यर्थं पृच्छति। कः सङ्कल्पयन्निति॥ श्लोकाक्षरयोजनया बुभुत्सितं क्रमं प्रत्याययति। उच्यत इत्यादिना॥ अन्यांश्चेति शास्त्री-

चित्तकाला हि येऽन्तस्तु द्वयकालाश्च ये

स्वप्नवच्चित्तपरिकल्पितं सर्वमित्येतदाशङ्क्यते । यस्मा-
च्चित्तपरिकल्पितैर्मनोरथादिलक्षणैश्चित्तपरिच्छेद्यैर्वैलक्ष-
ण्यं बाह्यानामन्योऽन्यपरिच्छेद्यत्वमिति सा नयुक्ताऽश-

व्यानिति यावत् । चित्तमध्ये वासनारूपेण व्यवस्थितानभिव्यक्तनामरूप-
त्वेन व्यवहारयोग्यत्वमाह । अव्याकृतानिति स कल्पनाकालान्
विद्यादादीन् स्थिरानित्यर्थः । वहिश्चित्तो वहिर्मुखान् वाह्यान् व्यव-
हारयोग्यान् पदार्थान् कल्पयति । अन्तश्चित्तस्तु तेभ्यो व्यावर्त्तबुद्धि-
र्मनोरथादिलक्षणानात्मन्यवस्थितान् भावान् व्यवहारयोग्यान् कल्प-
यित्वा पुनर्व्यवहारयोग्यतायै कल्पयतीत्यर्थः । एतदुक्तं भवति । यथा
लोके कुलालो वा तन्तुवायो वा घटं पटं वा कार्यं चिकीर्षुरादौ
व्यवहारयोग्यां व्यक्तिं बुद्धा वाऽऽविभाव्य पश्चात्तामेव वहिर्नामरूपा-
भ्यां सम्पादयति । तथैवायमादिकर्त्तापि मायालक्षणे स्वचित्ते नामरूपा
भ्यामव्यक्तरूपेण स्थितान् प्रष्टव्यपदार्थान् प्रथमं सिसृक्षिताकारेणा-
न्तर्विभाव्य पश्चाद्बहिः सर्वप्रतिपत्तिसाधारणरूपेण सम्पादयतीति
कल्पनायां क्रमाधिगतिरिति ॥ १३ ॥

कल्पितानां कल्पनाकालादन्यस्मिन् काले सत्त्वाभावाज्ज्ञायमाना-
वानाश्च कल्पनाकालात्कालान्तरेऽपि प्रत्यभिज्ञया सत्त्वावगमादनुप-
पन्ने तेषां मिथ्यात्वमित्याशङ्क्याह । चित्तेति ॥ ये कल्पना कालभाविनो
भावा मनस्यन्तर्वर्त्तन्ते । ये च प्रत्यभिज्ञायमानत्वेन पूर्वापरकालभा-
विनो बहिरेव व्यवहारयोग्या दृश्यन्ते ते सर्वे कल्पिताः सन्तो मिथ्यैव
भवितुमर्हन्ति । प्रत्यभिज्ञायमानत्वलक्षणो विशेषवस्तुना कल्पितत्वप्र-
युक्तः कल्पितेऽपि तद्दर्शनादित्यर्थः । श्लोकव्यावर्त्यामाशङ्कां दर्शयति ।
स्वप्नवदिति ॥ यथा स्वप्ने दृश्यमानं सर्वं कल्पितं मिथ्येवेष्यते । तथा
जागरितेऽपि दृष्टं सर्वं चित्तस्पन्दितं तेन कल्पितं मिथ्येत्येतस्माद्यापि

वहिः । कल्पिता एव ते सर्वे विशेषो नान्यहेतुकः ॥१४॥

---

चित्तकाला हि येऽन्तस्तु चित्तपरिच्छेद्याः नान्यश्चित्तकालव्यतिरेकेण परिच्छेदकः कालो येषां ते चित्तकालाः । कल्पनाकाल एवोपलभ्यन्त इत्यर्थः । द्वयकालाश्च भेदकाला अन्योन्यपरिच्छेद्याः । यथा गोदोहनमास्ते यावदास्ते तावद्गां दोग्धि यावद्गां दोग्धि तावदास्ते तावानयमेतावान् स इति परस्परपरिच्छेदकत्वं वाह्यानां भेदानां ते द्वयकालाश्चान्तश्चित्तकाला वाह्याश्च द्वयकालाः

---

निर्द्धारितमित्यत्र हेतुमाह । यस्मादिति ॥ आत्माविद्याविवर्त्तेन चित्तेन तावदन्तर्विनिर्म्मिता मनोरथरूपानन्तरन्तर्वर्त्तमाना वहौ रज्जुसर्पादयश्च ते चित्तेनैव परिच्छिद्यन्ते । ते हि कल्पनाकालमात्रभाविनो न प्रमीयन्ते । तैः सह वैलक्षण्यं मनसो वहिर्जाग्रद्दृश्यमानानां भावानामन्योऽन्यपरिच्छेद्यत्वं कालद्वयावच्छिन्नत्वेन प्रत्यभिज्ञानगोचरत्वमिति यस्मादुपलभ्यते तस्मादयुक्तं जागरितस्य स्वप्नवन्मिथ्यात्वमित्यर्थः॥ श्लोकाक्षरैरुत्तरमाह । सानेति ॥ येन मनस्यन्तर्मनोरथरूपाभावास्ते चित्तकाला भवन्तीत्यचित्तकालत्वे विशदयति । चित्तेत्यादिना ॥ वाच्यार्थमुक्त्वा विवक्षितार्थमाह । कल्पनेति ॥ द्वितीयपादमवतार्य्य व्याकरोति । द्वयेति ॥ ये मनसो वहिरुपलभ्यन्ते भेदकालाः कालस्य भेदो भेदकालः स येषां ते तथेति व्युत्पत्तेः । ततश्चान्येन पूर्वेनान्येन चापरेण परिच्छेद्याभिन्नकालावच्छिन्नत्वेन प्रत्यभिज्ञायमानत्वमुदाहरणनिष्ठतया स्फुटयति ॥ यथेति ॥ आगोदोहनं गोदोहनपर्य्यन्त मास्ते देवदत्तस्तिष्ठतीति प्रत्यभिज्ञाविषयत्वेनाभिज्ञोदाहरणीया यावता कालेनावच्छिन्नो वर्त्तते तावता कालेनावच्छिन्नो गोदोहनं

अव्यक्ता एव येऽन्तस्तु स्फुटा एव च ये बहिः ।

कल्पिता एव ते सर्वे न वाह्यो कालद्वयत्व विशेषः कल्पि-तत्वव्यतिरेकेणान्यहेतुकः । अत्रापि हि स्वप्नदृष्टान्तो भवत्येव ॥ १४ ॥

यद्यप्यन्तरव्यक्तत्वं भावानां मनोवासनामात्राभिव्य-क्तानां स्फुटत्वं वा वहिश्चक्षुरादीन्द्रियान्तरे विशेषः । नासौ

निवर्त्तयतीत्यनेककालावस्थायित्वेन प्रत्यभिज्ञाविषयत्वं तस्य दर्शयति । यावदिति ॥ यावता कालेनायं घटोऽर्थक्रियां निर्वर्त्तयितुं शक्नोति तावता कालेनावच्छिन्नः सन्नेष तिष्ठतीत्युदाहरणान्तरमाह । तावा-निति ॥ परोक्षतया स्थितो यावता कालेनावच्छिन्नः स्वकार्यं निर्वर्त्यं निर्वृत्तोत्येतावता कालेनावच्छिन्नः संतिष्ठतीत्यपरमुदाहरणमाह । एतावानिति ॥ उक्तेन न्यायेन परेणापरेण च कालेन परिच्छेद्यत्वं जाग्रद्दृश्यानां भावानामुपलभ्यते कालद्वयस्य च परिच्छेदकत्वम् । तथा ते सर्वे भावा वहिर्दृश्यमानाद्वयकालेन कालद्वयेन परिच्छेद्या भवन्तीत्यर्थः । तृतीयपादं व्याचष्टे । अन्तरिति ॥ चतुर्थपादार्थमाह । अनेनेत्यादिना ॥ वाह्यो जाग्रद्दृश्येषु वाह्यपदार्थेषु व्यवस्थितोकालद्वय-त्वेन कालद्वयावच्छेदेन कृतः प्रत्यभिज्ञायमानत्वरूपो विशेषो ऽन्यहेतु-को न भवति ॥ कल्पितेऽपि तथाविधविशेषसम्भवादित्यत्र दृष्टान्तमाह । अत्रापि हीति ॥ यद्यपि सर्वं जाग्रद्भेदजातं कल्पितं तथापि तत्र यथोक्तो विशेषः स्फुटः सिद्ध्यति । स्वप्ने सर्वस्य भेदजातस्य कल्पित-त्वेऽपि प्रत्यभिज्ञायमानत्वाज्जागरितेऽपि तदुपपत्तेरित्यर्थः ॥ १४ ॥

स्वप्नजागरितयोरुभयोरपि मिथ्यात्वे स्फुटास्फुटावभासविभा-गानुपपन्नेनाविशेषेण मिथ्यात्वमित्याशङ्क्याह । अव्यक्ता इति ये मनस्य-न्तर्भावमात्ररूपत्वादव्यक्ता ये च मनसो बहिरुपलभ्यमानाः स्फुटा भवन्ति ते सर्वे मनःस्पन्दमात्रबलेन कल्पिता मिथ्येत्यन्तर्बहिरिन्द्रियभेदनिमित्तः

**कल्पिता एव ते सर्वे विशेषस्त्विन्द्रियान्तरे ॥१५॥**

**जीवं कल्पयते पूर्वं ततो भावान् पृथग्वि-**

---

भेदानामस्तित्वकृतः स्वप्नेऽपि तथा दर्शनात् । किन्त्विन्द्रियान्तरकृत एवान्तः कल्पिता एव । जाग्रद्भावा अपि स्वप्नभाववदिति सिद्धम् ॥१५॥

वाह्याध्यात्मिकानां भावानामितरेतरनिमित्तनैमित्तिकतया कल्पनायाः किं मूलमिति । उच्यते । जीवं हेतु-

---

स्फुटत्वात् स्फुटत्वविशेषो न मिथ्यात्वममिथ्यात्वं वा तत्रोपयुज्यते । मिथ्याभूतेष्वपि तद्दर्शनादित्यर्थः ॥ श्लोकस्याक्षराणि व्याकरोति । यद्यपीत्यादिना ॥ मनस्यन्तर्मनोरथरूपाणां भावानामव्यक्तत्वमस्फुटत्वं तत्र हेतुमाह । मन इति ॥ चक्षुरादिग्राह्यत्वेन मनसो वहिर्भावानां स्फुटत्वं दृष्टं तदेषामसिथ्यात्वकृतमिति शङ्कां वारयति । नासाविति सर्व्वसम्प्रतिपन्नमिथ्यात्वेऽपि स्वप्ने स्फुटत्वविशेषप्रतिभानान्नासौ विशेषो मिथ्यात्वममिथ्यात्वे वा प्रयोजयितुं प्रभवतीत्याह । स्वप्नेऽपीति । स्वयं विशेषस्तर्हि केन सिद्ध्यतीत्याशङ्क्य चतुर्थपादार्थमाह । किं तर्हीति । मनोमात्रसम्बन्धादन्तर्भावानां वासनामात्ररूपाणामस्फुटत्वम् । वहिर्भावानान्तु चक्षुरादिवहिरिन्द्रियसम्बन्धात् यत्तु स्फुटत्वं तदेष विशेषो मिथ्यात्वाविशेषेऽपि सिध्यतीत्यर्थः । स्फुटत्वास्फुटत्वप्रतिभासभेदस्य मिथ्यात्वेऽपि सम्भवात्प्रागुक्तमनुमानमविरुद्धमित्युपसंहरति । अन्त इति ॥ ॥ १५ ॥

भवतु सदस्य कल्पितत्वम् । का पुनः सर्व्वकल्पना केन द्वारेणेत्याशङ्क्याह । जीवमिति । आत्मा हि सर्व्वं स्वमायावशेन कल्पयन्नादौ विशिष्टरूपेण जीवं कल्पयति । तत इति ॥ तत्सृष्ट्वा तदेवानुप्राविशदिति श्रुतेः स्वयमेव जीवमापद्यते । तद्द्वारेण पुनर्नानाविधान्

धान् । बाह्यानाध्यात्मिकांश्चैव यथाविद्य-
स्तथास्मृतिः ॥१६॥

फलात्मकमहं करोमि ममसुखदुःखे इत्येवं लक्षणम् ।
अनेनैवंलक्षण एव शुद्ध आत्मनि रज्ज्वामिव सर्पं कल्प-
यते पूर्व्वम् । ततस्तादर्थ्येन क्रियाकारकफलभेदेन प्राणा-
दीन्नानाविधान् भावान् बाह्यानाध्यात्मिकांश्चैव कल्पयते।
तत्र कल्पनायां को हेतुरित्युच्यते । योऽसौ स्वयं कल्पितो
जीवः सर्व्वकल्पनायामधिकृतः स यथाविद्यो यादृशी विद्या
विज्ञानमस्येति यथाविद्यस्तथाविधैव स्मृतिस्तस्येति तथा-
स्मृतिर्भवति स इति । अतो हेतुकल्पनाविज्ञानात्फल-

भावान् निर्मिमीते । ज्ञानस्मृतिवैषम्यात्तत्कल्पेषु भावेषु वैषम्योपपत्ति
रित्यर्थः । श्लोकव्यावर्त्त्यं प्रश्नमुत्थापयति । बाह्येति ॥ पदार्थाः
साध्यसाधनतया स्थिता बाह्याः सुखदुःखं ज्ञानं रागश्चेत्येवमादय
स्त्वाध्यात्मिकास्तेषां परस्परं निमित्तनैमित्तिकताऽस्ति । बाह्यान्निमि-
त्तीकृत्याध्यात्मिका भवन्ति । तानपि निमित्तीकृत्येतरे जायन्ते । तदेव-
मितरेतरनिमित्ततया नैमित्तिकतया च कल्पनायां मूलं वक्तव्यं ।
निर्मूलकल्पनायामतिप्रसङ्गादित्यर्थः । श्लोकाक्षरयोजनया परिहरति ।
उच्यत इति ॥ हेतुफलात्मकमित्युक्तमेव व्यनक्ति । अहमिति । हेतुफल
भावविकलं परिशुद्धात्मरूपं जीवकल्पनाधिष्ठानं दर्शयति । अनेनैव
मिति ॥ आरोपस्याधिष्ठानापेक्षास्तीत्यत्र दृष्टान्तमाह । रज्ज्वामिवेति-
द्वितीयतृतीयपादौ विभजते । तत इति ॥ तादर्थ्येन प्रथमं कल्पितस्य
भोक्तुर्जीवस्य शेषत्वेनेत्यर्थः । यद्यपि जीवः सर्वकल्पनायां मूलभूतो
हेतुस्तथापि तस्य कल्पनाविशेषो विशेषहेतुव्यतिरेकेण न सम्भव-

अनिश्चिता यथा रज्जुरन्धकारे विक-

विज्ञानं ततो हेतुफलस्मृतिस्ततस्तद्विज्ञानतदर्थक्रियाकारकतत्फलभेदविज्ञानानि । तेभ्यस्तत्स्मृतिस्तत्स्मृतेश्च पुनस्तद्विज्ञानानि तेभ्यस्तत्स्मृतिस्तत्स्मृतेश्च पुनस्तज्ज्ञानानीऽत्येवं वाह्यानाध्यात्मिकांश्चेतरेतरनिमित्तनैमित्तिकभावेनानेकधा कल्पयते ॥१६॥

तत्र जीवकल्पना सर्व्वकल्पनामूलमित्युक्तं सैव जीवकल्पना किं निमित्तेति दृष्टान्तेन प्रतिपादयति । यथा लोके स्वेन रूपेणानिश्चिताऽनवधारिता एवमेवेति रज्जुर्मन्दान्धकारे किं सर्प उदकधारा-दण्ड इति वानेकधाविकल्पिता भवति पूर्व्वं स्वरूपानि-

तीति शङ्कते । तत्रेति ॥ चतुर्थपादेनोत्तरमाह । उच्यत इति ॥ कल्पितो विशिष्टरूपेणेति शेषः । अधिकृतः स्वामित्वेन सम्बन्धेन सम्बद्ध इत्यर्थः । इति शङ्कः श्लोकाक्षरपरयोजनासमाप्तिद्योतनार्थः ॥ प्रकृतकल्पनामेव प्रपञ्चयति । अत इत्यादिना ॥ सत्यन्नपानाद्युपयोगे तृप्त्यादि भवति । असति न भवतीत्यन्वयव्यतिरेकरूपान्न्यायात् भोजनादिकं हेतुरिति कल्पनाविज्ञानमुत्पद्यते । ततस्तृप्त्यादिकं फलमिति कल्पनाविज्ञानं जायते । ततोऽपरेद्युरुक्तयोरुभयोरपि हेतुफलयोः स्मृतिरुद्भवति । ततश्च फलसाधनासमानजातीये कर्त्तव्यताविज्ञानम् । ततश्चाभिलषिततृप्त्यादिफलार्थत्वे पाकादिक्रियातत्कारकतण्डुलादि तत्फलान्ननिष्पत्त्यादीनि विशेषविज्ञानादीनि भवन्ति । ततो हेत्वादिस्मृतिः । ततस्तदनुष्ठानम् । ततश्च फलमित्यनेन क्रमेण मिथो हेतुहेतुमत्तया कल्पना भवतीत्यर्थः । प्रकृतां कल्पनामुपसंहरति । एवमिति ॥१६॥

ल्पिता। सर्पधारादिभिर्भावैस्तद्वदात्मा विक-
ल्पितः॥१७॥

---

अयनिमित्तम्। यदि हि पूर्व्वमेव रज्जुः सर्पेण निश्चिता स्यात् न सर्पादिविकल्पोऽभविष्यत्। स यथा स्वहस्ताङ्गुल्यादिषु एव दृष्टान्तस्तद्धेतुफलादिसंसारधर्म्मानर्थविलक्षणतया स्वेन विशुद्धविज्ञप्तिमात्रसत्ताद्वयरूपेणानिश्चितत्वाज्जीवप्राणाद्यनन्तभावभेदैरात्मा विकल्पित इत्येष सर्व्वोपनिषदां सिद्धान्तः॥१७॥

---

इदानीं जीवकल्पनानिमित्तं निरूपयति। अनिश्चितेति। श्लोकस्य तात्पर्य्यं दर्शयितुं वृत्तं कीर्त्तयति। तत्रेति॥ पूर्व्वश्लोकः सप्तम्यर्थः। जीवकल्पनाया नित्यत्वायोगात् सनिमित्तत्वस्य वक्तव्यत्वात् तस्य च वस्तुत्वे निवृत्त्यनुपपत्तेः। अवस्तुत्वे च निमित्तत्वासिद्धेर्जीवकल्पनाया दुर्घटत्वात्तत्कार्य्यभूतापि कल्पना नावकल्पत इत्याशङ्कते। सैवेति॥ उत्तरत्वेन श्लोकाक्षराण्यवतार्य्य व्याचष्टे। दृष्टान्तेनेति॥ स्वप्रसाधारणं रूपं रज्जुत्वं तेनेति यावत्। अनवधारितत्वमेव स्फोरयति। एवमेवेति॥ रज्जुरेवेयमित्यनेन प्रकारेणेत्यर्थः॥ सर्पादिकल्पनायामन्वयव्यतिरेकसिद्धमुपादानमुपन्यस्यति। स्वरूपेति॥ उक्तावधारणाराहित्ये कारणं सूचयति। मन्देति॥ पूर्व्वं रज्जुस्वरूपनिश्चयतयात्प्रागवस्थायामित्यर्थः एतदेव व्यतिरेकद्वारा विवृणोति। यदि हीति॥ देवदत्तस्य हस्ताद्यवयवेषु तद्रूपेणैव निश्चितेषु सर्पादिविकल्पो यथा नोपलभ्यते तथा पुरोवर्त्तिन्यपि रज्जुस्वरूपेण निश्चितेनासौ युक्तस्तया च रज्जुज्ञानादेव भवतीत्यर्थः उपपादितं दृष्टान्तमनूद्य दार्ष्टान्तिकमभिसन्दधानश्चतुर्थपादार्थमाह। एष इति॥ हेतुफलादित्यादिशब्देन कर्त्तृत्वभोक्तृत्वरागद्वेषादि गृह्यते। विलक्षणत्वमेव स्फुटयति।

निश्चितायां यथा रज्ज्वां विकल्पो विनिवर्त्तते । रज्जुरेवेति चाद्वैतं तद्वदात्मविनिश्चयः॥१८॥

---

रज्जुरेवेति निश्चये सर्व्वविकल्पनिवृत्तौ रज्जुरेवेति चाद्वैतं यथा तथा नेति नेतीति सर्व्वसंसारधर्म्मशून्यप्रतिपादकशास्त्रजनितविज्ञानसूर्य्यालोककृतात्मविनिश्चयः । आत्मैवेदं सर्व्वं अपूर्व्वोऽनपरोऽन्तनरोऽवाह्यः सवाह्याभ्यन्तरो ह्यजोऽजरोऽमरोऽमृतोऽभय एवाद्वय इति॥१८॥

---

स्वेनेति ॥ अनारोपितेनेति यावत् । विप्रुषेर्विशुद्धत्वं जन्मादिराहित्यमाकारान्तरशून्यत्वं तन्मात्रत्वञ्चेत्यर्थः । तन्मात्रत्वमयुक्तं सामान्यविशेषाभावादित्याशङ्क्याह । सत्तेति ॥ न च तत्रान्यदस्ति सुखमिति मत्वा विशिनष्टि । अद्वयेति ॥ सच्चिदानन्दाद्वयात्मा विद्याविलसितं द्वैतमित्यत्र प्रमाणं सूचयति । इत्येष इति ॥ अद्वैतश्रुतयस्तावत्तत्रोपलभ्यन्ते यत्र हि द्वैतमिव भवतीत्याद्याश्च द्वैतस्य प्रतिभासमानयोर्म्पात्वमावेदयन्त्यः श्रुतयः श्रूयन्ते ॥ तेनाद्वैतं तत्त्वं द्वैतमविद्याविजृम्भितमिति प्रमाणसिद्धमित्यर्थः ॥१७॥

अविद्याकृता जीवकल्पनेत्यन्वयमुखेनोक्तं तदेवेदानीं व्यतिरेकमुखेन दर्शयति । निश्चितायामिति । रज्जुरेवेति रज्ज्वां निश्चितायां तदज्ञाननिवृत्तेस्तदुत्थसर्पादिविकल्पः सर्व्वथा निवर्त्तते रज्जुमात्रञ्चावशिष्यते तद्वदात्मनि श्रौतो निश्चयो यदा सम्पद्यते तदा सर्व्वस्यात्माऽविद्याकल्पितस्य जीवादिविकल्पस्य व्यावृत्तेरद्वैतमेवात्मतत्त्वं परिशिष्यते । तस्मादात्माऽविद्याविजृम्भितं जीवकल्पनेत्यर्थः । दृष्टान्तभागं व्याचष्टे । रज्जुरिति ॥ तद्वदित्यादि व्याकरोति । तथेति । सर्पस्यापि संसारात्मनो धर्म्मस्यात्मन्यारो-

प्राणादिभिरनन्तैश्च भावैरेतैर्विकल्पितः।
मायैषा तस्य देवस्य यया सम्मोहितः स्वयम्
॥१९॥

---

यद्यात्मैक एवेति निश्चयः कथं प्राणादिभिरनन्तैर्भावैरेतैः संसारलक्षणैर्विकल्पित इति। उच्यते। शृणु मायैषा तस्यात्मनो देवस्य। यथा मायां विना विहितमायागगनमतिविमलं कुसुमितैः सपलाशैस्तरुभिराकीर्णमिव

---

पितस्यासक्त्वानेदकं यन्निषेधशास्त्रं तेन जनितं विज्ञानमेव सूर्यालोकस्तत्कृतो योऽयमात्मविनिश्चयः स एषा द्वितीयः शिष्यते। द्वैतं पुनः सर्व्वमेव व्यावृत्तं भवतीत्यर्थः। आत्मविनिश्चयमेव विशिनष्टि। आत्मेति॥ सर्व्वमिदमात्मैवेत्युक्तेः पूर्णत्वं तस्योच्यते। पूर्व्वभाविना कारणेन संस्पर्शशून्योऽपूर्व्वः पश्चाद्भाविना कार्य्येण सम्बन्धविधुरोऽनपरमनन्तरं छिद्रं तच्छून्योऽनन्तरश्चिदेकरसस्तस्यैव प्रत्यक्त्वमवाह्यत्वं कार्य्यकारणा-स्पृष्टमुभयकल्पनाधिष्ठानत्वेन ततोऽर्थान्तरत्वादित्याह। सबाह्येति॥ विशेषणत्रयं कौटस्थ्यव्यवस्थापनार्थम्॥ जन्मादिसम्बन्धाभावे कारणमविद्यासम्बन्धरहितत्वं दर्शयति। अभय इति॥ न खल्वविद्यातत्त्व कारणत्वेन सम्बन्धमनुभवति। तस्य पूर्णत्वेन कारणानपेक्षत्वादित्याह। एक इति॥ द्वैताद्व्यावृत्तत्वमवधारणं न विद्यायाः। निराश्रयत्वोपपत्तेः। आश्रयान्तरस्य चासत्त्वात्। तत्रैव सा प्रविशतीति चेत् सत्यम्। अविद्दृष्ट्या तस्यात्मत्व प्रवेशेऽपि वस्तुदृष्ट्या नासौ तस्मिन् प्रवेष्टुं प्रभवतीत्याह। अद्वय इति॥१८॥

आत्मनो द्वितीयत्वे कथमनेकैर्भावैस्तस्य विकल्पितत्वमित्यभिप्राया प्रतिपत्त्रा प्रत्यवतिष्ठते। प्राणादिभिरिति॥ सिद्धान्ती स्वाभिसन्धिमुद्घाटयन्नुत्तरमाह। मायेति॥ चोद्यभागं विभजते। यदीति॥ उक्त-

प्राण इति प्राणविदो भूतानीति च तद्विदः।
गुणा इति गुणविदस्तत्त्वानीति च तद्विदः॥२०

करोति तथेयमपि देवस्य माया ययाऽयं स्वयमपि मोहितो भवति। मम माया दुरत्ययेत्युक्तम् ॥१८॥

प्राणः प्राज्ञो वीजात्मा तत्कार्य्यभेदा ह्येतरे स्थि

---

राद्ईमुत्तरत्वेन व्याकरोति। उच्यत इति॥ मायामेव दृष्टान्तेन स्पष्टयति। यथेति॥ तामेव मायां कार्य्यद्वारा स्फोरयति। यथेति॥ यथा लौकिको मोहितो मोहपरवशो दृश्यते तथाऽयमात्मा स्वस्मैव माया सम्बन्धान्मोहितो भवति॥ अतो मोहद्वाराऽऽत्मन्येव मायाधिगतिरित्यर्थः। मायाया मोचहेतुत्वं भगवतापि सूचितमित्याह। ममेति॥१८॥

के ते प्राणादयोऽनन्ता भावा यैरात्मा विकल्पते माययेत्यपेक्षायां प्राणादिविकल्पनामुदाहरति। प्राण इति॥ प्राणो हिरण्यगर्भस्तटस्थेश्वरो वा स जगतो हेतुरिति प्राणविदो हैरण्यगर्भाद्या वैशेषिकादयश्च कल्पयन्ति। तदिदं कल्पनामात्रम्॥ स्वतन्त्रस्य हिरण्यगर्भस्य सर्वजगद्धेतुत्वे मानाभावात्। पौरुषेयागमस्यापौरुषेयश्रुतिविरोधे स्वार्थे मानत्वायोगात्तटस्थेश्वरवादस्य च प्रमाणयुक्तिविहीनस्य प्रतिपत्तुमशक्यत्वादित्यर्थः। कल्पनान्तरं दर्शयति। भूतानीति चेति॥ पृथिव्यप्तेजोवायवस्तत्त्वानि तानि च चत्वारि भूतानि जगत्कारणानीति लोकायतिकास्तदपि कल्पनामात्रम्। न हि भूतानि स्वतः सिद्धानि जड़त्वविरोधात्। नापि परतः सिद्धानि। स्वगुणस्य चैतन्यस्य स्वप्रकाशत्वायोगाद्बहिर्गतोपलब्ध्यस्य बहिर्विषयत्वादर्शनात्। अतो भूतानि जगत्कर्तॄणीति कल्पनैवेत्यर्थः। सत्त्वरजस्तमांसि त्रयो गुणाः साम्येनावस्थिता जगतो महदादिलक्षणस्य कारणमिति साङ्ख्याः। तदपि कल्पनामात्रम्। साम्येन स्थितानां कारणत्वे प्रलयाभावप्रसङ्गात्।

पादा इति पादविदो विषया इति च तद्विदः।

---

त्यन्ताः। अन्ये च सर्वे लौकिकाः सर्वप्राणिपरिकल्पिता

---

वैषम्यभञ्जनस्य च निर्हेतुकत्वे सदा तदापातात्। सहेतुकत्वे हेतोर्नि-त्यत्वे प्राचीनदोषानुषङ्गादनित्यत्वे हेत्वन्तरापेक्षायामनवस्थानादित्याह। गुणा इतीति॥ कल्पनान्तरमाह। तत्त्वानीति चेति॥२०॥

आत्मविद्या शिवेति सङ्क्षेपतस्त्रीणि तत्त्वानि सर्वं जगत्प्रवर्त्त-कानीति शैवा मन्यन्ते तदपि कल्पनामात्रम्। आत्मनो भिन्नत्वे शिवस्य घटादितुल्यत्वप्रसङ्गादभिन्नत्वे तत्त्वानां त्रित्वव्याघातादित्यर्थः। एक-स्यात्मनो विश्वादयः सर्वव्यवहारहेतवो भवन्तीत्यपि कल्पनामात्रम्। निरंशस्यात्मनोंऽशभेदानुपपत्तेरित्याह। पादा इतीति॥ वात्स्यायन-प्रभृतीनां कल्पनां कथयति। विषया इतीति॥ शब्दादयो विषया भूयो भूयोभुज्यमानास्तत्त्वमिति विभ्रममात्रम्॥ विषस्य विषयाणाञ्च दूरमत्य-न्तमन्तरं। उपभुक्तं विषं हन्ति विषयाः स्मरणादपीति॥ विषयानुसन्धा-नस्य निन्दितत्वात्तेषां पारमार्थिकतत्त्वभावानुपपत्तेरित्यर्थः॥ भूर्भुवः स्वरिति त्रयो लोका वस्तुभूताः सन्तीति पौराणिकाः। तदपि कल्पना-मात्रम्। स्थानभेदेन त्रित्वे तदानन्त्यस्य दुरुत्तरत्वात्स्वातन्त्र्यस्य चासिद्धत्वादित्याह। लोका इतीति॥ अग्नीन्द्रादयो देवास्तत्तत्फल दातारो नेश्वरस्तथेति देवताकाण्डीयाः। तदपि कल्पनामात्रम्। यस्यादादिप्रयत्नमपेक्ष्य फलदातृत्वे तेषां स्वत्येभ्यो विशेषभावप्रसङ्गात्। स्वातन्त्र्येणोपकारकत्वे तदाराधनवैयर्थ्यात्। तद्भक्तानामपि विप्रतिप-त्तिदर्शनात् तत्प्रसादस्या किञ्चित्करत्वादित्याह। देवा इति चेति ॥२१॥

ऋग्वेदादयो वेदाश्चत्वारस्तत्त्वानीति पाठका वदन्ति। तदपि कल्पनामात्रम्। न हि वेदा लौकिकवर्णव्यतिरिक्ता दृश्यन्ते। क्रमवता-मेव वर्णानां वेदशब्दवाच्यत्वाङ्गीकारात्। क्रमस्योच्चारणोपलब्ध्योरन्य-

लोका इति लोकविदो देवा इति च तद्विदः॥२१॥

वेदा इति च वेदविदो यज्ञा इति च तद्विदः। भोक्तेति च भोक्तृविदो भोज्यमिति च तद्विदः॥२२॥

---

भेदा रज्ज्वामिव सर्पादयः। तच्छून्ये आत्मनात्मस्वरूपा

---

तरङ्गतो वर्णस्यारोप्यते। तथा च तथाविधक्रमवतां वर्णानामारोपित रूपेण वेदशब्दवाच्यत्वात्कुतो वेदानां परमार्थतेत्याह। वेदा इति॥ ज्योतिष्टोमादयो यज्ञा वस्तुभूता भवन्तीति बौधायनप्रभृतयो याज्ञिका मन्यन्ते तदपि भ्रान्तिमात्रम्। यज्ञं व्याख्यास्यामो द्रव्यं देवता त्याग इत्यत्रैकैकस्मिन्यज्ञविज्ञानाभावात्समुदायस्य चावस्तुत्वादित्याह। यज्ञा इति चेति॥ भोक्तैवात्मा न कर्त्तेति साङ्ख्याः। तत्र भोगो यदि विक्रिया स्वीक्रियते तर्हि कथं नानित्यत्वादिप्रसङ्गः, स्वभावत्वे सदा स्यादिति विषयसन्निधौ भोक्तृत्वं भ्रान्तिरेवेत्याह। भोक्तेति चेति॥ सूपकारास्तु भोज्यं वस्त्विति प्रतिजानते। तदपि न। मधुरादिरसव्यञ्जनादेरेकदैवान्यथात्वदर्शनादेकरूपत्वाभावादित्याह। भोज्यमिति चेति॥ २२॥

आत्मा सूक्ष्मोऽणुपरिमाणः स्यादिति केचित्। तन्न। पुनपदशेषशरीरव्यापिवेदनानुसन्धानासिद्धेरित्याह। सूक्ष्म इतीति। स्थूलो देहोऽहमित्यादावात्मेति लोकायतभेदः। तन्न। मृतसुषुप्तयोरपि सङ्घातविशेषाच्चैतन्यप्रसङ्गात्। एकैकस्य च भूतस्य चैतन्यादर्शनात्सङ्घातस्य चावस्तुत्वादित्याह। स्थूल इति चेति॥ मूर्त्तस्त्रिशूलादिधारी महेश्वरश्चक्रादिधारी वा परमार्थो भवतीत्यागमिकाः। तदपि भ्रान्तिमात्रम्। ब्रह्मादिशरीरवत्तस्यापि शरीरस्य पाञ्चभौतिकत्वाल्लीलाविग्रहकल्पनस्य। विग्रहाभावे लीलाभावादयुक्तमित्याह। मूर्त्त इति॥

सूक्ष्म इति सूक्ष्मविदः स्थूल इति च तद्विदः॥
मूर्त्त इति मूर्त्तविदो अमूर्त्त इति च तद्विदः
॥ २३ ॥

काल इति कालविदो दिश इति च तद्विदः
वादा इति वादविदो भुवनानीति तद्विदः॥२४॥
मन इति मनोविदो बुद्धिरिति च तद्विदः।

---

निश्चयहेतोरविद्यया कल्पिता इति पिण्डीकृतोऽर्थः।

---

अमूर्त्तः सर्व्वाकारशून्यो निःस्वभावः परमार्थ इति शून्यवादिनः तदपि कल्पनामात्रम्। परमार्थो निःस्वभावश्चेति व्याघातादित्याह। अमूर्त्त इति चेति॥२३॥

कालः परमार्थ इति ज्योतिर्विदः। तच्च न। कालैक्ये मुहूर्त्तादिव्यवहारायोगात्। तन्नानात्वेऽपि न स्वातन्त्र्यम्। अन्य-विषयत्वेन प्रतीतेः। उदयकाल इत्यादिना क्रियाधर्म्मत्वेन स्फुट-त्वात्। न च क्रियाधर्म्मत्वं कालेऽपि तदुत्पत्तिदर्शनादन्यथा-कालानवच्छिन्नत्वेन क्रियानित्यत्वापातादित्याह। काल इतीति॥ स्वरोदयविदस्तु दिशः परमार्था इत्याहुः। तदपि भ्रान्तिमात्रम्। तद्विदामपि पराजयदर्शनादित्याह। दिश इति चेति॥ धातुवादो मन्त्रवादश्चेत्यादयो वादा वस्तुभूता भवन्तीति केचित्। तदपि कल्पना-मात्रम्। ताम्रादिस्वभावे स्थिते नष्टे च कनकादिस्वभावासम्भवात्। मन्त्रवादेऽपि कालदृष्टो न वर्ति। अकालदृष्टः स्वयमेवोत्पद्यतीत्यस्यु पगमाद्ग्रामोहमात्रमित्याह। वादा इतीति॥ भुवनानि चतुर्दश वस्तू-नीति भुवनकोषविदः। तदपि कल्पनामात्रम्। तेषामदृष्टत्वात्। न च तेभ्यस्तद्दर्शनम्। तेषां मिथो विप्रतिपत्तिदर्शनादित्याह। भुवनानीति ॥ २४ ॥

मन एवात्मेति लोकायतभेदः। तदपि भ्रान्तिमात्रम्। तस्य

चित्तमिति चित्तविदो धर्माधर्मौ च तद्विदः ॥२५॥
पञ्चविंशक इत्येके षड्विंश इति चापरे ।
एकत्रिंशक इत्याहुरनन्त इति चापरे ॥२६॥

प्राणादिश्लोकानां प्रत्येकं पदार्थव्याख्याने फलम्प्रयोजन-

---

स्वातन्त्र्ये क्लेशप्राप्त्यनुपपत्तेः । अस्वातन्त्र्ये च घटवदनात्मत्वात्करण-त्वाच्च दीपवदात्मत्वायोगादित्याह । मन इति ॥ बुद्धिरेवात्मेति बौद्धाः। तेषामपि भ्रान्तिमात्रमेव । तत्सुषुप्ते व्यभिचाराद्दृश्यस्य च घटवदति-रिक्तवेद्यत्वादित्याह । बुद्धिरिति ॥ चित्तमेव बाह्याकारशून्यं विज्ञा-नम् । तदेवात्मेत्यपरे । तत्रापि प्रागुक्तन्यायाविशेषात्तुल्यं भ्रान्तित्व-मित्याह । चित्तमिति ॥ धर्माधर्मौ विधिनिषेधचोदनागम्यौ परमा-र्थाविति मीमांसकाः । तदपि कल्पनामात्रम् । देशकालादिषु धर्मा-धर्मयोर्विप्रतिपत्तिदर्शनादित्याह । धर्मेति ॥२५॥

प्रधानं मूलप्रकृतिः । महदहङ्कारतन्मात्राणीति सप्त प्रकृतिवि कृतयः । पञ्च ज्ञानेन्द्रियाणि । पञ्च कर्मेन्द्रियाणि । पञ्च विषयाः । मनश्चैकमिति षोडश विकाराः । पुरुषस्तु दृशिस्वभाव इति पञ्चविं-शतिसङ्ख्याकः प्रपञ्चो वस्त्विति साङ्ख्याः । तच्च कल्पनामात्रम् । पञ्चविं-शतिविशेषणस्याव्यावर्त्तकत्वे वैयर्थ्यात् व्यावर्त्तकत्वे च व्यावर्त्त्य प्रमि-त्यप्रमित्योरनुपपत्तेरित्याह । पञ्चविंशक इति ॥ पातञ्जलाः पुनरीश्वर-मधिकं पश्यन्तः षड्विंशतिपदार्था इति विकल्पयन्ति । तदयुक्तम् । ईश्वरस्य पुरुषान्तर्भावादधिकत्वानुपपत्तेः । अनन्तर्भावे च घटवदनीश्वर त्वप्रसङ्गादित्याह । षड्विंश इति चेति ॥ पाशुपतास्तु रागाविद्यानिय-तिकालकलामायाधिकास्त एवैकत्रिंशत्पदार्था इति ब्रुवते । तन्न । क्लेश-त्वेऽपि रागाविद्ययोरवान्तरभेदवद्दम्भदादेरपि तद्भिन्नत्वेन सङ्ख्याति रेकात् तस्य रागोपलक्षितत्वेन तस्याप्यविद्योपलक्षितत्वेन च न्यूनता-

लोकान् लोकविदः प्राहुराश्रमा इति तद्विदः । स्त्रीपुंनपुंसकं लैङ्गाः परापरमथापरे ॥२७॥

सृष्टिरिति सृष्टिविदो लय इति च तद्विदः ।

---

त्वाद्यत्नो न कृतः ॥२०॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५॥ २६ ॥ २७ ॥ २८ ॥

किं बहुना प्राणादीनामन्यतमसुक्तमनुक्तं वाऽन्यं यं

---

पातादविद्यामाययोस्चैकत्वादवान्तरभेदे च नियतावपि तदुपपत्तेः स ङ्ख्यातिरेकतादवस्थम् । कालकलासु च तत्प्रसिद्धेरित्याह । एकत्वं-श्च इति ॥ अनन्तः पदार्थभेदो न नियतोऽस्तीति केचित् तदपि न । वादिनां विवाददर्शनात् । विवादस्य चाज्ञानमूलकत्वादित्याह । अनन्त इतीति ॥२६॥

लोकानुरञ्जनमेव तत्त्वमिति लौकिकाः । तदपि विभ्रममात्रम् । लोकस्य भिन्नरुचित्वात्तदनुरञ्जनस्येश्वरेणापि कर्त्तुमशक्यत्वादित्याह । लोकानिति ॥ ब्रह्मचर्यादयस्त्वाश्रमाः परमार्था इति समर्थयन्ते तदसत् ॥ वेषस्याश्रमशब्दार्थत्वे शूद्रादेरपि प्रसङ्गाज्जातेश्च दुर्विवेचनत्वात्तन्मूलस्याश्रमस्य दर्शयितुमशक्यत्वात्संस्कारस्य च देहसमवायित्वे पार लौकिककत्वायोगादसङ्गे चात्मनि तदसमवायादित्याह ॥ आश्रमा-इतीति ॥ वैयाकरणास्तु स्त्रीपुंनपुंसकं शब्दजातं तत्त्वमिति वर्णयन्ति । तदप्ययुक्तम् । स्वरादेः शब्दस्वभावत्वे सर्व्वादीनां त्रिलिङ्गत्वायोगादेकस्यानेकस्वभावत्वासम्भवादौपाधिकधर्मत्वे च तस्यावस्तुत्वप्रसङ्गादित्याह । स्त्रीपुंनपुंसकमिति ॥ द्वे ब्रह्मणी वेदितव्ये परं चापरञ्चेति केचित् । तच्च न । परिच्छेदे कचिदपि ब्रह्मत्वायोगात् वस्तुतोऽपरिच्छिन्नस्य तद्भावादित्याह । परावरमिति ॥२७॥

सृष्टिर्वा लयो वा स्थितिर्वा तत्त्वमिति पौराणिकाः । तदपि

स्थितिरिति स्थितिविदः सर्वे चेह तु सर्वदा॥२८
यं भावं दर्शयेद्यस्य तं भावं स तु पश्यति
तञ्चावति स भूत्वासौ तद्ग्रहः समुपैति तं॥२९
एतैरेषोऽपृथग्भावैः पृथगेवेति लक्षितः ।

भावं पदार्थं दर्शयेद्यस्याचार्य्योऽन्यो वाऽप्त इदमेव तत्त्वमिति स तं भावमात्मभूतं पश्यत्ययमहमिति वा ममेति वा तस्य द्रष्टारं सभावोऽवति यो दर्शितो भावो स भूत्वा रचति । स्वेनात्मना सर्व्वतो निरुणद्धि । तस्मिन् ग्रहस्तद्ग्रहस्तदभिनिवेशः । इदमेव तत्त्वमिति स तं गृहीतारमुपैति । तस्यात्मभावं निगच्छतीत्यर्थः ।२९।

एतैः प्राणादिभिरात्मनोऽपृथग्भूतैरपृथग्भावैरेष

कल्पनामात्रम् । सतोऽसतश्चोत्पत्त्याद्यभावस्य वक्ष्यमाणत्वादिति मत्वाह । सृष्टिरित्यादिना॥ यथोक्तकल्पनाधिष्ठानं सूचयति । सर्वे चेति॥ उदाहृतानुदाहृताश्च कल्पनाभेदा यावन्तो विद्यन्ते ते सर्व्वेऽपि प्रकृता त्मन्येव कल्पनावस्थायां कल्प्यन्ते नात्मनः कल्पितत्वम् । सर्व्वस्य कल्पितत्वेनाधिष्ठानत्वायोगादित्यर्थः ॥ प्राणादिश्लोकेषु प्राणशब्दार्थमाह। इति ॥ तस्यैव बीजात्मनो विकारविशेषत्वादितरेषां न ततोऽत्यन्तभिन्नतेत्याह । तत्कार्य्येति ॥ अन्तिमपदार्थं स्फुटयति । अन्य इति ॥ कुलधर्मो ग्रामधर्मो देशधर्म्म इत्येते सर्व्वशब्देन गृह्यन्ते । तेषामात्मनि तदज्ञानादेव कल्पितत्वं सदृष्टान्तं स्पष्टयति । रज्ज्वामिति ॥ आत्मनोऽधिष्ठानयोग्यतार्थं कल्पनाशून्यत्वमाह । तच्छून्य इति किमिति समुदायार्थः श्लोकानामुच्यते । श्लोकान्तरेष्विव प्रत्येकं पदार्थव्याख्यानमेतेषु किं न स्यादित्याशङ्क्याह । प्रत्येकमिति ।२८॥

लौकिकानां परीक्षकाणाञ्च कतिपयकल्पनाभेदानुदाहृत्यानन्त-

एवं यो वेद तत्त्वेन कल्पयेत्सोऽविशङ्कितः॥३०

आत्मा रज्जुरिव सर्पादिविकल्पनारूपैः पृथगेवेति लक्षितो ऽप्यलक्षितो मूढैरित्यर्थः। विवेकिनान्तु रज्ज्वामिव कल्पिता सर्पादयो नात्मव्यतिरेकेण प्राणादयः सन्तीत्यभिप्रायः। इदं सर्व्वं परमात्मेति श्रुतेः। एवमात्मव्यतिरेकेणासत्त्वं रज्जुसर्पवदात्मनि कल्पितानामात्मानञ्च केवलं निर्विकल्पं यो वेद तत्त्वेन श्रुतितो युक्तितश्च सोऽविशङ्कितो वेदार्थं विभागतः कल्पयेत् कल्पयतीत्यर्थः। इदमेवं परं वाक्य-मदोऽन्यपरमिति। नह्यनध्यात्मविद्वेदान् ज्ञातुं शक्नोति तत्त्वतः। नह्यनात्मवित्कश्चित्क्रियाफलमुपाश्नुत इति हि मानवं वचनम्। ३०।

त्वादशेषतस्तेषामिहाहर्त्तुमशक्यत्वं दृष्ट्वा सङ्क्षेपमात्रमाचष्टे। यं भाव-मिति॥ पादत्रयं विभजते॥ किं बहुनेत्यादिना॥ तमेव भाव विशि-नष्टि। यो दर्शित इति॥ स कथं द्रष्टारं रक्षतीत्यपेक्षायामाह। अमाविति॥ साधकपुरुषतादात्म्यमापद्येत्यर्थः॥ रक्षणप्रकारं प्रकटयति स्वेनेति॥ साक्षादसाधारणरूपत्वेन तत्रैव निष्ठामापाद्य ततोऽन्यत्र प्रवृत्तिमुपासकस्य निवारयतीत्यर्थः। चतुर्थपादं व्याचष्टे। तस्मिन्निति॥ एतेनान्यत्र प्रवृत्तिनिरोध हेतुकतत्त्वहि प्राणादीनामात्मवत्त्वं प्राप्तमि-त्याशङ्क्य कल्पितानामधिष्ठानातिरेकेणावस्तुत्वान्नैवमित्याह॥ एतै-रिति॥२९॥

उक्तज्ञानस्तुत्यर्थमाह। एवमिति। पूर्व्वार्द्धं व्याकरोति। एतै-रिति॥ कल्पितानामधिष्ठानातिरेकेण सत्वास्फुरणयोरभावात्तद्द्वारेणा-त्मनि भेददर्शनमविवेकिनामस्तु। तदन्येषां कथमुपलब्धिरित्याशङ्क्याह। विवेकिनामिति॥ प्राणादीनामात्मातिरेकेणासत्त्वे प्रमाणमाह।

**स्वप्नमाये यथा दृष्टे गन्धर्व्वनगरं यथा ।**
**यथा वम्र्मीदं दिष्टं वेदान्तेषु विचक्षणैः ॥ ३१ ॥**

यदेतद्द्वैतस्यासत्त्वमुक्तं युक्तितस्तद्वेदान्तप्रमाणावगतमित्याह । स्वप्नश्च माया च स्वप्नमाये असद्वस्त्वात्मिके ऽसत्यौ सद्वस्त्वात्मिके इव लक्ष्येते अविवेकिभिः । यथा च प्रसारितपण्यापणगृहप्रासादस्त्रीपुंजनपदव्यवहारा-कीर्णमिव गन्धर्व्वनगरं दृश्यमानमेव सदकस्मादभावतां गतं दृष्टम् । यथा च स्वप्नमाये दृष्टेऽसद्रूपे तथाविश्वमिदं द्वैतं समस्तमसद्दृष्टं क्वेत्याह । वेदान्तेषु । नेह नानास्ति किञ्चन । इन्द्रो मायाभिः ॥ आत्मैवेदमग्र आसीत् । ब्रह्मैवेदमग्र आसीत् द्वितीयाद्वै भयं भवति । नतु तद्-

इदमिति ॥ उत्तरार्द्धं योजयति । एवमिति ॥ तत्त्वेनात्मवेदनोपायं सूचयति । तत्त्वेनेति ॥ स्वप्नदृश्यवज्जाग्रद्दृश्यानां मिथ्यात्वसाधको दृश्यत्वादिहेतुरत्र युक्तिरित्युच्यते । यथोक्तविज्ञानवान्वेद किङ्करो न भवति किन्तु स यं वेदार्थं ब्रूते स एव वेदार्थो भवतीत्यर्थः । विभागतो वेदार्थव्याख्यानमभिनयति । इदमिति ॥ ज्ञानकाण्डं साक्षादद्वैतवस्तुपरम् । कर्म्मकाण्डं तु साध्यसाधनसम्बन्धबोधनद्वारा परम्परया तस्मिन् पर्य्यवसितम् । सर्व्वे वेदा यत्पदमामनन्तीति श्रुतेरित्यर्थः । आत्मविदो वेदार्थवित्त्वमुक्तं व्यनक्ति । न हीति ॥ तदेव हि वेदार्थतत्त्वं यत्प्रत्यागात्मस्वरूपमतस्त्वाध्यात्मविदेव यथाम्भोऽन तत्त्वज्ञाने प्रभवतीत्यर्थः । उक्तेऽर्थे स्मृतिमुदाहरति । न हीति ॥ क्रियाशब्देन प्रमाणमुच्यते । तत्फलं तत्त्वज्ञानमग्निहोत्रादिक्रियायाश्च शुद्धिद्वारा तस्मिन् पर्य्यवसानादित्यर्थः ॥ ३० ॥

याभिर्युक्तिभिरस्मिन् प्रकरणे द्वैतस्य मिथ्यात्वं साध्यते तासां प्रमाणानुग्राहकत्वादनाभासत्वमवसेयमित्याह । स्वप्नेति ॥ श्लोकस्य

न निरोधो नचोत्पत्तिर्न बद्धो न च सा-

द्वितीयलक्षि। यच त्वस्य सर्व्वमात्मैवाभूदित्यादिषु विच-
क्षणैर्निपुणतरवस्तुदर्शिभिरेभिः पण्डितैरित्यर्थः। तमः
स्वभ्रनिभं दृष्टं वर्षबुद्बुदसन्निभम्॥ नाशप्रायं सुखाद्धीनं
नाशोत्तरमभावगमिति हि व्यासस्मृतेः॥३१॥

प्रकरणार्थोपसंहारार्थोऽयं श्लोकः। यदा वितथं
द्वैतमात्मैवैकः परमार्थतः सन् तदेदं निष्पन्नं भवति
सर्व्वोऽयं लौकिको वैदिकश्च व्यवहारोऽविद्याविषय एवेति।
तदा न निरोधः। निरोधनं निरोधः प्रलय उत्पत्ति-
र्जननं बद्धः संसारी जीवः साधकः साधनान्मोचस्य

तात्पर्य्यार्थमाह। यदेतदद्वैतस्येति॥ असत्त्वे सत्त्ववत् प्रतिभानं कथ-
मित्याशङ्क्य श्लोकाक्षराणि व्याचष्टे। स्वप्नश्चेति। प्रसारितानि तत्र
तत्र प्रकटतां प्रापितानि। पण्यानि क्रयविक्रयद्रव्याणि येषामापणेषु
हट्टेषु ते प्रसारितपण्यापणास्ते च गृहाश्च प्रासादाश्च स्त्रीपुञ्जनपदा
स्तैषां व्यवहारास्तैराकीर्णमिति योजना॥ दृष्टान्तद्वयमनूद्य दार्ष्टान्ति-
कमाह। यथा चेति॥ गन्धर्व्वनगराकारं चकारार्थः। नेह नानास्ति
किञ्चनेति वेदान्ताः। द्वैतस्य वस्तुतोऽसत्त्वे स्मृतिमपि दर्शयति। तम
इति॥ तमसि मन्दान्धकारे रज्ज्वामधिष्ठाने भूच्छिद्रमिति यद्भ्रान्त्या
भाति तन्निभं तत्तुल्यं विवेकिभिर्विश्वं दृष्टं बद्बुदीव चञ्चलमालक्षितं
नाशप्रायं वर्त्तमानकालेऽपि तद्योग्यतासत्त्वात्। न च द्वैतं कदाचिदपि
सुखकरमुपलभ्यते दुःखाक्रान्तं तु दृश्यते। तच्च नाशग्रस्तम्। नाशदूर्द्ध्वं
मसत्त्वमेवापगच्छति न तर्हि तस्य परमार्थत्वं प्रमाणाभावादित्यर्थः
॥३१॥

धकः । न मुमुक्षुर्न्नवै मुक्त इत्येषा परमार्थता ॥ ३२ ॥

मुमुक्षुर्म्मोचनार्थी मुक्तो विमुक्तबन्धः । उत्पत्तिप्रलययोरभावाद्बद्धादयो न सन्तीत्येषा परमार्थता । कथमुत्पत्तिप्रलययोरभाव इत्युच्यते । द्वैतस्यासत्त्वात् । यत्र हि द्वैतमिव भवति । य इह नानेव पश्यति । आत्मैवेदं सर्व्वम् । ब्रह्मैवेदं सर्व्वम् । एकमेवाद्वितीयमिदं सर्व्वम् । यदयमात्मेत्यादिना श्रुतिभ्यो द्वैतस्यासत्त्वं सिद्धम् । सतो ह्युत्पत्तिः प्रलयो वा स्यान्नासतः शशविषाणादेः । नाप्यद्वैतमुत्पद्यते लीयते वा । अद्वयञ्चोत्पत्तिप्रलयवच्चेति विप्रतिषिद्धम् । यस्तु पुनर्द्वैतसंव्यवहारः स रज्जुसर्पवदात्मनि प्राणादिलक्षणः कल्पित इत्युक्तम् । न हि मनोविकल्पनायाः रज्जुसर्पादिलक्षणाया रज्ज्वां प्रलय उत्पत्ति-

प्रमाणयुक्तिभ्यां द्वैतमिथ्यात्वप्रसाधनेनाद्वैतमेव पारमार्थिकमिति स्थिते निर्द्धारितमर्थं तं सङ्गृह्णाति । नेत्यादिना ॥ श्लोकस्य तात्पर्य्यार्थमाह । प्रकरणेति ॥ कोऽसौ प्रकरणार्थस्तस्य संग्रहे किं सिद्ध्यति तदाह । यदेति ॥ व्यवहारमात्रस्याविद्याविषयत्वेऽपि किं स्यादिति चेत्तदाह । तदेति ॥ चतुर्थपादार्थमाह । उत्पत्तीति ॥ उक्तमेवार्थं प्रश्नप्रतिवचनाभ्यां प्रपञ्चयति । कथमित्यादिना ॥ द्वैतासत्त्वं श्रुत्यवष्टम्भेन स्पष्टयति । यत्र हीति ॥ द्वैतस्यासत्त्वे कथमुत्पत्तिप्रलयौ न स्यातामित्याशङ्क्य किं द्वैतस्य तौ किंवाऽद्वैतस्येति आद्यं विकल्पं दूषयति । सतो हीति ॥ द्वितीयं प्रत्याह । नापीति ॥ व्यावहारिकद्वैताङ्गीकारात्तस्योत्पत्तिप्रलयावित्याशङ्क्याह । यस्त्विति ॥ विमत

र्वा । न च मनसि रज्जुसर्पस्योत्पत्तिः प्रलयो वा न चोभ-
यतो वा । तथा मानसत्वा विशेषाद्द्वैतस्य । न हि
नियते मनसि सुषुप्ते वा द्वैतं गृह्यते । अतो मनोविकल्प
नामात्रं द्वैतमिति सिद्धम् । तस्मात्सूक्तं द्वैतस्यासत्त्वा-
न्निरोधाद्यभावः परमार्थतेति । यद्येवं द्वैताभावे शास्त्र
व्यापारो नाद्वैते विरोधात् तथा च सत्यद्वैतस्य वस्तुत्वे
प्रमाणाभावात् शून्यवादप्रसङ्गः । द्वैतस्य चाभावात् न
रज्जुसर्पादिविकल्पनाया निरास्पदत्वानुपपत्तिरिति
प्रत्युक्तमेतत् कथमुज्जीवसीत्याह । रज्जुरपि सर्वविकल्प
स्यास्पदभूता विकल्पितैवेति दृष्टान्तानुपपत्तिः । न ।
विकल्पनाक्षयेऽविकल्पितस्याविकल्पितत्वादेव सत्त्वोप-

---

तत्त्वतो नोत्पत्तिप्रलयवान् कल्पितत्वाद्रज्जुसर्पवदित्यत्र दृष्टान्तासि-
द्धिमाशङ्क्य रज्जुसर्पस्य रज्ज्वामुत्पत्तिप्रलयौ मनसि वा द्वयोर्वेति
विकल्प्य प्रथमं प्रत्याह । न हीति ॥ रज्जुं पश्यतां सर्वेषामुपलब्धि
प्रसङ्गादित्यर्थः ॥ द्वितीयं दूषयति । न चेति ॥ बहिरुपलब्धिविरोधा-
दित्यर्थः ॥ तृतीयं निरस्यति । न चेति ॥ उभयतो मनोरज्ज्वन्यतरेण
रज्जुसर्पस्योत्पत्तिप्रलयौ युक्तौ द्वयाधारत्वोपलम्भादित्यर्थः । रज्जु-
सर्पवद्द्वैतस्य मानसत्वाविशेषान्न तत्त्वतो जन्मविनाशौ दर्शयितु-
मशक्याविति दार्ष्टान्तिकमाह । तथेति ॥ द्वैतस्य न कुतश्चित्तात्त्विकौ
जन्मविनाशाविति शेषः । मानसत्वासिद्धिमाशङ्क्याह । न हीति ॥
अन्वयव्यतिरेकाभ्यां द्वैतं मनोविकल्पनामात्रमिति निगमयति । अत
इति ॥ न च मनो द्वैतस्य दर्शनमात्रे निमित्तमिति युक्तम् । अमसि-
द्धस्याज्ञातसत्तायां प्रमाणाभावादित्यभिप्रेत्य प्रकृतमुपसंहरति । तस्मा-
दिति ॥ निरोधाद्यभावस्य परमार्थत्वे तत्रैव शास्त्रव्यापाराद्द्वैते तद्-

पत्तेः । रज्जु सर्पवदसत्त्वमिति चेत् । न एकान्तेन विकल्पितत्वादविकल्पितरज्ज्वंशवत्प्राक्सर्पाभावविज्ञानात् ॥ विकल्पयितुश्च प्राग्विकल्पनोत्पत्तेः सिद्धत्वाभ्युपगमादेव सत्त्वानुपपत्तिः । कथं पुनः स्वरूपे व्यापाराभावे शास्त्रस्य द्वैतविज्ञाननिवर्त्तकत्वम् । नैष दोषः । रज्ज्वां सर्पादिवदात्मनि द्वैतस्याविद्याध्यस्तत्वात् कथं सुख्यहं दुःखी मूढो जातो मृतो जीर्णो देहवान् पश्यामि व्यक्ताव्यक्तः कर्त्ता फली संयुक्तो वियुक्तः क्षीणो वृद्धोऽहं ममैत इत्येवमादयः सर्वे आत्मन्यध्यारोप्यन्ते । आत्मैतेष्वनुगतः सर्वत्राव्यभिचारात् यथा सर्पधारादिभेदेषु रज्जुः ।

---

व्यापाराद्भावबोधने व्याप्तस्य भावबोधने व्यापारविरोधादद्वैतमप्रामाणिकं प्राप्तमिति शङ्कते । यद्येवमिति ॥ अद्वैतस्य प्रामाणिकत्वाभावे किं स्यादित्याशङ्क्याह । तथा चेति ॥ अद्वैतस्याप्रामाणिकत्वेऽपि कुतः शून्यवादो द्वैतस्य सत्त्वादित्याशङ्क्याह । द्वैतस्येति ॥ नाप्रामाणिकशून्यवादो युक्तो यथा रज्ज्वामारोपितसर्पादे रज्जुरधिष्ठानम् । न हि निरधिष्ठानो भ्रमोऽस्ति । तथा द्वैतकल्पनाया निरधिष्ठानत्वायोगात्तदधिष्ठानत्वेनाद्वैतमास्थेयमित्योङ्कारप्रकरणे परिहृतमेतच्चोद्यं कथमुद्भावयसीति सिद्धान्तवाद्याह । नेत्यादिना ॥ तत्र शून्यवादी स्वमतानुसारेण दृष्टान्तासम्प्रतिपत्त्या चोदयति । आहेति ॥ स्वमतसम्मतस्यैव दृष्टान्तत्वनियमात् । प्रसिद्धिमात्रेण परप्रतिबोधनसम्भवात् । भ्रमबाधे परिशिष्यमाणस्यावधेः सत्यतया रज्ज्वादौ दृष्टत्वात् द्वैतभ्रमबाधसाक्षितया स्फुरणं तच्चैतन्यस्याकल्पितत्वादेव सत्त्वान्नशून्यताप्रसक्तिरित्युत्तरमाह । नेत्यादिना ॥ अद्वैतमसदप्रामाणिकत्वाद्रज्जुसर्पवदिति तदकल्पितत्वासिद्धिं शङ्कते । रज्ज्विति ॥ रज्जुसर्पस्यासत्त्वे भ्रान्तिविषयत्वं प्रयोजकं आत्मनस्तु भ्रमसाक्षित्वान्नियमेन

यदा चैवं विशेष्यस्वरूपप्रत्ययस्य सिद्धत्वान्न कर्त्तव्यत्वं शास्त्रेण । अकृतकर्त्तृ च शास्त्रं कृतानुकारित्वेऽप्रमाणम् । यतोऽविद्याध्यारोपितसुखित्वादिविशेषप्रतिबन्धादेरात्मनः स्वरूपेणानवस्थानं स्वरूपावस्थानञ्च श्रेय इति सुखित्वादिनिवर्त्तकं शास्त्रमात्मन्यसुखित्वादिप्रत्ययकरणेन नेति नेत्यस्थूलादिवाक्यैरात्मस्वरूपवदसुखित्वाद्यपि सुखित्वादिभेदेषु नानुवृत्तोऽस्ति धर्मः । यद्यनुवृत्तः स्यान्नध्यारो-

---

भ्रमाविषयत्वान्नासत्त्वमित्युत्तरमाह । नैकान्तेनेति ॥ अप्रामाणिकत्वहेतोरनैकान्तिकत्वं दोषान्तरमाह । अविकल्पितेति ॥ नाऽयं सर्पो रज्जुरेवेति सर्पाभावज्ञानपूर्वकपुरोवर्त्तिरज्जुत्वनिश्चयात्प्रागवस्थायां प्रामाणिकत्वाभावेऽपि सन्नेवाज्ञातो रज्ज्वंशोऽभ्युपगम्यते । तथा सदैव प्रामाणिकत्वाभावेऽपि सन्नेवात्मा भविष्यतीत्यर्थः ॥ आत्मनोऽसत्वाभावे हेत्वन्तरमाह । विकल्पयितुश्चेति ॥ आत्मनो द्वैतभ्रमाधिष्ठानत्वेन सम्भावितत्वाद्बाधसाक्षित्वेन परिशिष्टत्वात्पूर्वं भ्रमोत्पत्तेः स्वत सिद्धत्वाच्च प्रमाणविषयत्वेऽपि नास्ति शून्यतेत्युक्तम् । इदानीं प्रमिते धर्मिणि प्रतिषेधदर्शनादात्मनाऽप्रमितत्वे तत्र द्वैताभावप्रमापकं शास्त्रमयुक्तमिति शङ्कते । कथमिति ॥ प्रतिपन्ने धर्मिणि प्रतिषेधात्प्रमिते प्रतिषेधस्य विशेषणवैफल्यादेवानभ्युपगमादात्मनश्च सर्वकल्पनास्वधिष्ठानाकारेण स्फुरणाङ्गीकरणात् तस्मिन् प्रतिपन्ने द्वैतस्य प्रतिषेधः सम्भवतीति परिहरति । नैष दोष इति ॥ भ्रमाविषयस्यात्मनोऽध्यासानुगततया स्फुरणमघटमानमित्याक्षिपति । कथमिति ॥ स्वप्रकाशत्वेन स्वतो निर्व्विकल्पकस्फुरणेऽपि सविकल्पकव्यवहारे समारोपितसंसृष्टाकारेण भ्रमविषयत्वमविरुद्धमित्याह । सुख्यहमित्यादिना ॥ उक्तन्याये नात्मप्रतीतेः सिद्धत्वात्प्रतिपन्ने तस्मिन् द्वैतप्रतिषेधस्य सुकरतेति

भावैरसद्भिरेवायमद्वयेन च कल्पितः॥

---

पितसुखित्वादिलक्षणो विशेषः । यथोष्णत्वगुणविशेषव-
त्यग्नौ शीतता तस्मिन्निर्विशेष एवात्मनि सुखित्वादयो
विशेषाः कल्पिताः । यत्त्व सुखित्वादिशास्त्रमात्मनस्तत्सु-
खित्वादिविशेषनिवृत्त्यर्थमेवेति सिद्धम् । सिद्धन्तु निवर्त्त-
कत्वादित्यागमविदां सूत्रम् ॥३२॥

---

फलितमाह । यदा चेति ॥ न केवलमारोपितविशेषणैर्विशेष्यस्यात्मनः
स्वरूपस्फुरणस्य सिद्धत्वादेव न शास्त्रेण कर्त्तव्यत्वमनुवादत्वेनाप्रा-
माण्यप्रसङ्गाच्चैवमित्याह । अज्ञतेति ॥ स्फुरत्यात्मनि द्वैतानिषेधकत्वे-
ऽपि शास्त्रस्य फलाभावादप्रामाण्यं तदवस्थमित्याशङ्क्याह । अविद्येति॥
प्रतिषेधशास्त्रादपनीते प्रतिबन्धे स्वरूपावस्थानं फलतीत्यर्थः ॥
निःशेषदुःखनिवृत्तिर्निरतिशयानन्दावाप्तिश्च परं श्रेयो न स्वरूपाव-
स्थानमित्याशङ्क्याह स्वरूपेति ॥ इति प्रसिद्धं मोक्षशास्त्रेष्विति शेषः ॥
द्वैतनिवर्त्तकत्वे शास्त्रस्य कारकत्वं स्यादित्याशङ्क्याह । आत्मनीति
असुखित्वादेः स्वभाविकत्वादात्मनि स्फुरत्यस्फुरणमनुपपन्नमित्याशङ्क्य
भ्रमविषयशुक्तीदमंशादेश्च स्वाभाविकोऽपि रजतादिर्भेदो दोषमाहा-
त्म्याद्यथा न प्रतिभाति तथाऽचिन्त्यशक्त्यविद्याप्रभावादात्मनि स्फुरत्यपि
सुखित्वाद्यध्यासविरोध्यसुखित्वादिरूपेण स्फुरणमविरुद्धमित्याह ।
आत्मेति ॥ विपक्षे भ्रमानुपपत्तिरित्याह । यदीति ॥ उक्तमर्थं सङ्क्षिप्य
निगमयति । तस्मिन्निति ॥ असुखित्वादेरकल्पितत्वमसिद्धमाशङ्क्य
निरस्यति । यत्त्विति ॥ अस्थूलमशोकान्तरमित्यादि वाक्यं शास्त्रशब्देन
गृह्यते ॥ उक्तेऽर्थे द्रविड़ाचार्य्यसम्मतिमाह । सिद्धं त्विति । ब्रह्मणि

भावा अप्यद्वयेनैव तस्मादद्वयता शिवा ॥३३॥

पूर्वश्लोकार्थस्य हेतुमाह। यथा रज्ज्वामसद्भिः सर्प-धारादिभिरद्वयेन रज्जुद्रव्येण सताऽयं सर्प इयं धारा दण्डोऽयमिति वा रज्जुद्रव्यमेव कल्प्यते। एवं प्राणादि-भिरनन्तैरसद्भिरेवाविद्यमानैः परमार्थतः न ह्यप्रचलिते मनसि कश्चिद्भाव उपलक्षयितुं शक्यते केनचित्। न चात्मनः प्रचलनमस्ति। प्रचलितस्यैवोपलभ्यमाना भावा न पर-मार्थतः सन्तः कल्पयितुं शक्याः। अतोऽसद्भिरेव प्राणा-

पादानां व्युत्पत्त्यभावेऽपि सिद्धमेव शास्त्रप्रामाण्यमावोन व्युत्पन्नज्ञ पदसंस्तुतैः स्थूलादिव्युत्पन्नपदैः स्वभावाविरुद्धैतोभाव-बोधनेनाध्यस्तनिवर्त्तकत्वादिति सूत्रार्थः। ३२।

यदुक्तं निरोधाद्यभावस्य परमार्थतेति तदयुक्तम्। सामान्यवि-शेषात्मकं वस्तु नानारूपमिति मते निरोधादेः सुसाध्यत्वादित्याश-ङ्क्याह। भावैरिति॥ भावा व्यावृत्ता विशेषास्ते च व्यभिचारित्वादसन्तो रज्जुसर्पवदद्वयमनुवृत्तं सामान्यं विशेषाकारैरवस्तुभूतैः सामान्या कारेण च तादृशेनायमव्यावृत्तानुगतपूर्णसत्ताचिदेकतानः स्वात्मैव मूढैर्मोहमाहात्म्यात् कल्प्यते। न वस्तुतः सामान्यविशेषभावोऽस्ति परस्पराश्रयत्वादित्यर्थः॥ विशेषाणामसत्त्वे कथं सत्त्वेन व्यवहारः स्यादित्याशङ्क्य सत्तादात्म्येन कल्पितत्वात् तेषां सत्त्वेन व्यवहारोपपत्ति-रित्याह। भावा इति। अनुगतसत्ताकारेण कल्पिताः सत्त्वव्यवहारा भवन्तीति शेषः। सामान्यविशेषभावस्य कल्पितत्वादखण्डैकरसत्वे वस्तुनः सिद्धे निरोधादेर्दुःसाधनत्वमुचितमिति फलितमाह। तस्मा-दिति॥ श्लोकतात्पर्यं दर्शयति। पूर्वेति॥ निरोधादिसर्वविशेषाभावो-पलक्षितं वस्तु वस्तुभूतमिति पूर्वश्लोकार्धस्य सामान्यविशेषात्मके

नात्मभावेन नानेदं न स्वेनापि कथञ्चन ।

द्विभावैरद्वयेन च परमार्थसताऽऽत्मना रज्जुवत्सर्व्वविकल्पास्पदभूतेनायं स्वयमेवात्मा कल्पितः । सदैकस्वभावोऽपि सं स्वे च प्राणादिभावा अद्वयेनैव सताऽऽत्मना विकल्पिताः । न हि निरास्पदा काचित्कल्पनोपलभ्यते । अतः सर्व्वकल्पास्पदत्वात्स्वेनात्मनाऽद्वयस्याव्यभिचारात् । कल्पनावस्थायामप्यद्वयता शिवा । कल्पना एव त्वशिवाः । रज्जुसर्पादिवत्त्रासादिकारिण्यो हि ताः । अद्वयता अभया अतः सैव शिवा ॥३३॥

---

वस्तुनि विशेषणाश्रित्य निरोधादेः सुसाधनत्वादसत्त्वमाशङ्कते । तेन तस्य साधनापेक्षायां तत्प्रदर्शनपरोऽयं श्लोक इत्यर्थः ॥ तत्र पूर्वार्द्धगताक्षराणि दृष्टान्तावष्टम्भेन व्याचष्टे । यथेत्यादिना ॥ संसृष्टरूपेण कल्पितत्वेऽपि स्वरूपेणानारोपितत्वाद्रज्जुद्रव्यस्य व्यवहारिकसत्यत्वमुक्तं यम अविद्यामानैरयमात्मा कल्प्यते न परमार्थवस्तेषां सत्त्वमिति शेषः । कथं प्राणादीनां परमार्थतोऽसत्त्वमित्याशङ्क्यान्वयव्यतिरेकाभ्यां तेषां मनः स्पन्दितःमात्रत्वप्रतीतेर्म्मृषात्वं स्वप्नवदित्याह । न हीति ॥ आत्मपरिणामत्वान्मनःस्फुरणमन्तरेणापि प्राणादिभावानां परमार्थतः सत्त्वमित्याशङ्क्याह । न चेति ॥ न हि विभोरात्मनो नभोवच्चलनं वास्तवमवकल्पते । न च तदभावनिरवयवस्य परिणामसम्भवनेत्यर्थः । प्राणादीनामात्मपरिणामत्वासम्भवे फलितमाह । प्रचलितस्येति ॥ प्रगतं चलितं यस्य स तथा कूटस्थस्यैवात्मनोः भासमाना भावा न परमार्थतः सन्तो भवितुमुत्सहन्ते । दृश्यत्वजडत्वादिना स्वप्नवन्मिथ्यात्वसिद्धेरित्यर्थः । एवं प्राणादिभावानां मिथ्यात्वं प्रसाध्यफलितं दर्शयन् पूर्वार्द्धाक्षराणां व्याख्यानमुपसंहरति । अत इति ।। अद्वयस्य परमार्थत्वात् तदात्मना कथमात्मकल्पितः स्यादित्याशङ्क्य स्वरूपेणाकल्पितस्य

## उपासनाश्रितोधर्मो जाते ब्रह्मणि वर्त्तते।

ओंकारनिर्णये उक्तः प्रपञ्चोपशमः शिवोऽद्वैत आत्मेति प्रतिज्ञामात्रेण । ज्ञाते द्वैतं न विद्यते इति च । तत्र द्वैताभावस्तु वैतथ्यप्रकरणेन स्वप्नमायागन्धर्वनगरादिदृष्टान्तैर्दृश्यत्वाद्यन्तवत्त्वादि हेतुभिस्तर्केण च प्रतिपादितः। अद्वैतं किमागममात्रेण प्रतिपत्तव्यमाहोस्वित्तर्केणापी त्यत आह । शक्यते तर्केणापि ज्ञातुम् । तत्कथमित्यद्वैत प्रकरणमारभ्यते । उपास्योपासनादिभेदजातं सर्वं वितथं केवलश्चात्माऽद्वयः परमार्थ इति स्थितमतीतप्रकरणे । यत उपासनाश्रित उपासनात्मनो मोक्षसाधन-

तर्कावष्टम्भेन द्वैतवैतथ्यनिरूपणं परिसमाप्याद्वैतं परमार्थिकमपि तर्कतः सम्भावयितुं प्रकरणान्तरं प्रारिप्सुरुपास्योपासकभेददृष्टिं तावदपवदति। उपासनेति ॥ देहस्य धारणाद्धर्मो जीवो भूतसङ्घाताकारेण जाते ब्रह्मणि तदभिमानित्वेन वर्त्तते । स प्रागुत्पत्तेरजः सर्वमित्येवं कालावच्छिन्नं वस्तु मन्यते। स पुनरुपासनां पुरुषार्थसाधनत्वेनाश्रितस्तदेव ब्रह्म प्रतिपत्स्ये शरीरपातादूर्द्ध्वमित्येवम् । अतो मिथ्याज्ञानवानवतिष्ठते तेनासौ कृपणोऽल्पको ब्रह्मविद्भिः स्मृतश्चिन्तित इत्यर्थः ॥ प्रकरणान्तरमवतारयन् वृत्तमनुद्रवति । ओङ्कारेति ॥ तस्य हि निर्णये प्रथमे प्रकरणे प्रपञ्चोपशमः शिवोऽद्वैत इति विशेषणैरात्मा प्रतिज्ञामात्रेणाद्वितीयो व्याख्यात इत्यर्थः । द्वितीयप्रकरणार्थं सङ्क्षिप्यानुवदति । ज्ञात इति ॥ तत्रैवाद्ये प्रकरणे ज्ञाते द्वैतं न विद्यत इत्यत्र प्रतिज्ञामात्रेण द्वैताभाव उक्तः । स तु द्वितीयेन प्रकरणेन हेतुदृष्टान्तात्मकेन तर्केण च प्रतिपादितो नात्र प्रतिपादयितव्यामवशिष्यतेत्यर्थः । तृतीयं प्रकरणमाकाङ्क्षापूर्वकमवतारयति ।

प्रागुत्पत्तेरजं सर्वं तेनासौ कृपणः स्मृतः ॥१॥

---

त्वेन गत उपासकोऽहं ममोपास्यं ब्रह्म । तदुपासनं कृत्वा जाते ब्रह्मणि इदानीं वर्त्तमानोऽजं ब्रह्म शरीरपातादूर्द्ध्वं प्रतिपत्स्येत्र प्रागुत्पत्तेश्चाजमिदं सर्व्वमहञ्च । यदात्मकोऽहं प्रागुत्पत्तेरिदानीं जातो जाते ब्रह्मणि च वर्त्तमान उपासनया पुनस्तदेव प्रतिपत्स्य इत्येवमुपासनाश्रितो धर्म्मः । साधको येनैवं क्षुद्रब्रह्मवित् तेनासौ कारणेन कृपणो दीनोऽल्पकः स्मृतो नित्याजब्रह्मदर्शिभिर्महात्मभिप्रायः ॥ यद्वाचा नाभ्युदितं येन वागभ्युद्यते तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासत इत्यादि श्रुतेस्तलवकाराणाम् ॥ १ ॥

---

अद्वैतमिति ॥ नैषा तर्केण मतिरापनेयेति श्रुतेरद्वैतं कथं तर्केण ज्ञातुं शक्यमित्याक्षिपति । तत्कथमिति ॥ स्वतन्त्रतर्काप्रवेशेऽपि तस्मिन्नागमिकतर्कस्य सहकारितया सम्भावनाहेतुत्वात्तर्केणापि ज्ञातुं शक्यमिति व्यवहारोपपत्तिरिति मत्वाह । अद्वैतेति ॥ यदि तर्केणा द्वैतं सम्भावयितुं प्रकरणमारभ्यते तर्हि किमित्युपासकनिन्दा प्रथमं प्रस्तूयते तत्राह । उपास्येति ॥ उक्तवक्ष्यमाणविरोधित्वादुपासकस्य तन्निंदा प्रकृतोपयोगिनीत्यर्थः । कथं तर्हि तत्राजत्वमात्मनो दर्शयन्ती श्रुतिर्घटिष्यते तत्राह । प्रागिति ॥ प्रागवस्थायां सर्व्वमिदमजमहञ्च तथेत्युपासके यतो मन्यतेऽतस्तु प्रागवस्य ब्रह्मविषया भविष्यत्यजत्वश्रुतिरित्यर्थः । कार्य्येस्थित्यवस्थायां यदि ब्रह्म तन्मात्वमिष्टं तर्हि किमुपासनया प्राप्तव्यमित्याशङ्क्याह । यदात्मक इति ॥ इदानीमुत्पत्त्यवस्थायां जातो जाते ब्रह्मणि स्थित्यवस्थायां वर्त्तमानोऽहं प्रागुत्पत्तेर्यदात्मकः सन्नासं तदेव पुनः प्रलयावस्थायामुपासनया प्रतिपत्स्येतत्-

अतो वक्ष्याम्यकार्पण्यमजाति समताङ्गतम् ।

सबाह्याभ्यन्तरमजमात्मानं प्रतिपत्तुमशक्नुवन्नविद्यया दीनमात्मानं मन्यमानो जातोऽहं जाते ब्रह्मणि वर्त्ते तदुपासनाश्रितः सन् ब्रह्म प्रतिपत्स्य इत्येवं प्रतिपन्नः कृपणो भवति यस्मादतो वक्ष्याम्यकार्पण्यमकृपणभावमजं ब्रह्म॥ तद्धि कार्पण्यास्पदं यत्रान्योऽन्यत् पश्यत्यन्यच्छृणोत्यन्यद्विजानाति तदल्पं मर्त्यं सद्वाचारम्भणं विकारो नामधेयमित्यादिश्रुतिभ्यः । तद्विपरीतं सबाह्याभ्यन्तरमजमकार्पण्यं भूमाख्यं ब्रह्म । । यत्प्राप्याविद्याकृतसर्व्वकार्पण्यनिवृत्तिस्तदकार्पण्यं वक्ष्यामीत्यर्थः । तद जाति अविद्यमाना जातिरस्य । समताङ्गतं सर्व्वसाम्यं गतम् । कस्मात् । अवयववैषम्याभावात् । यद्धि सावयवं वस्तु तदवयववैषम्यं जायत इत्युच्यते । इदन्तु निरवयवत्वात्समताङ्गतमिति न कैश्चिदवयवैः स्फुटत्यतोऽजात्य

कृतन्यायादिति सम्बन्धः । तत्र कारणां शाखायामुपास्यस्य ब्रह्मत्वनिषेधदर्शनाच्चोपासकनिन्दा युक्तेत्याह । यद्वाचेति ॥ अनभ्युदितमनभिप्रकाशितमभ्युद्यतेऽभिप्रकाश्यते उपास्यते वाचाविषयोकुर्व्वन्तीत्यर्थः । आदिशब्देन यन्मनसेत्यादि गृह्यते ॥१॥

भेददर्शिनमुपासकमद्वैतविरोधिनं निन्दित्वा सम्प्रत्यद्वैतप्रतिज्ञां करोति । अत इति ॥ जातिर्जन्म तद्रहितमजाति । तत्र हेतुमाह । समतामिति ॥ जन्मराहित्यं साधयति । तथेति ॥ अतः शब्दार्थमाह । सबाह्येति ॥ प्रतिज्ञाभागं विभजते । अकृपणेति ॥ तदेव व्यतिरेकमुखेन स्फोरयति । तद्धीति ॥ दर्शनादि विशेषव्यवहारगोचरीभूत

यथा न जायते किञ्चिज्जायमानं समं ततः॥२॥
आत्मा ह्याकाशवज्जीवैर्घटाकाशैरिवोदितः ।

कार्पण्यम् । समन्ततः समन्ताद्यथा न जायते किञ्चिद-ल्पमपि न स्फुटति रज्जुसर्पवदविद्याक्षतदृष्ट्या जायमानं येन प्रकारेण न जायते सर्वतोऽजमेवं ब्रह्म भवति तथा तं प्रकारं शृण्वित्यर्थः ॥।२॥

अजाति ब्रह्माकार्पण्यं वक्ष्यामीति प्रतिज्ञातं तत्-सिद्ध्यर्थं हेतुं दृष्टान्तं वक्ष्यामीत्याह । आत्मा परो हि

कार्य्यजातं परिच्छिन्नं नाशि चोच्यते । तदेव क्षपणत्वालम्बनमित्यर्थः । तच्च मिथ्याभूतमित्यत्र प्रमाणमाह । वाचारम्भणमिति ॥ कार्पण्य-मुक्त्वा तदभावरूपमकार्पण्यं प्रकटयति । तद्विपरीतमिति ॥ प्राप्य-मात्मेति यावत् । द्वितीयपादं व्याचष्टे । तदजातीत्यादिना ॥ सर्वा-त्मना साम्यं निर्व्विशेषत्वं गतमित्यत्र हेतुं पृच्छति । कस्मादिति ॥ निर्विशेषत्वे हेतुमाह । अवयवेति ॥ हेतुमेव प्रकटयन् व्यतिरेक-मुखेनाजत्वं प्रपञ्चयति । यद्धीत्यादिना । समन्तत इति पूर्वोक्तसङ्की-र्त्तनम् ।। द्वितीयार्द्धं व्याचष्टे । यथेत्यादिना ॥ यथा रज्ज्वां सर्पो भ्रान्त्या जायते तथा सर्वं भ्रान्तिदृष्ट्या जायमानत्वेन भासमानमपि यथा येन प्रकारेण वस्तुतो न जायते तथा किन्तु सर्वतो देशतः कालतो वस्तुतश्च पूर्वं कूटस्थमेव वस्तु भवति तथा तं प्रकारमिति सम्बन्धः ॥२॥

प्रतिज्ञावाक्ये ब्रह्मशब्देन परमात्मना प्रकृतः स कीदृगित्यपे-क्षायामाह । आत्मा हीति ॥ जीवभेदप्रतीतिस्तर्हि कथमित्याशङ्क्याह। जीवैरिति ।। यथाऽऽकाशो विभुत्वादिधर्म्मः स्वगततात्विकभेदवान्न भवति तथा परमात्मना विशेषाभावात् । यथा च महाकाशो घटा-

घटादिवच्च सङ्घातैर्जातावेतन्निदर्शनम् ॥३॥

यस्मादाकाशवत् सूक्ष्मो निरवयवः सर्वगत आकाशव-दुक्तो जीवैः चेतज्ञैर्घटाकाशैरिव घटाकाशतुल्य उदित उक्तः। स एवाकाशसमः पर आत्मा। अथवा घटाका-शैर्यथोदित उत्पन्नस्तथा परो जीवात्मभिरुत्पन्नो जीवा-त्मनां परस्मादात्मन उत्पत्तिर्या श्रूयते वेदान्तेषु सा महाकाशाद्घटाकाशोत्पत्तिसमानं परमार्थत इत्यभिप्रायः-तस्मादेवाकाशाद्घटादयः सङ्घाता यथोत्पद्यन्ते एवमाकाश स्थानीयात्परमात्मनः पृथिव्यादिभूतसङ्घाता आध्यात्मि-काश्च कार्य्यकारणलक्षणा रज्जुसर्पवद्विकल्पिता जायन्ते।

---

काशाकारेण प्रतीयते तथा परमात्मना नानाविधजीवाकारेण प्रतीति-गोचरो भवतीत्यर्थः। कथं सङ्घातानां परस्मादुत्पत्तिरित्याशङ्क्याह। घटादिवदिति॥ यथा मृदः सकाशाद्घटादयो जायन्ते तथा परमा-त्मैव पृथिव्यादिसङ्घाताकारेण जायत इत्यर्थः। यदाऽऽत्मनो जीवादी-नामुत्पत्तिरिष्टा तदा तस्यामुत्पत्तौ दृष्टान्तवचनमेतदित्याह। जाताविति॥ श्लोकस्य वृत्तानुवादपूर्वकं तात्पर्य्यमाह। जातीत्या-दिना प्रथमपादस्याक्षरार्थमाह। आत्मेत्यादिना॥ विमतस्वगततात्त्वि-कभेदशून्यः सूक्ष्मत्वान्निरवयवत्वाद्विभुत्वादाकाशवत्। न च परमा-ण्वादौ सूक्ष्मत्वादेर्व्यभिचारः। तस्यैवासम्मतत्वात्। क्वचिदपि तात्त्वि-कभेदसम्प्रतिपत्तेश्चेत्यर्थः॥ जीवैरित्यादिना व्याचष्टे। जीवैरिति॥ जीवाकारेण परमात्मैवोक्तः। क्षेत्रज्ञं चापि मां विद्धीतिस्मृतेरित्यर्थः। उदितशब्दश्चेदुक्तार्थस्तर्हि परस्यैवात्मनः सङ्घातरूपेणोक्तत्वे सप्रप-ञ्चत्वं प्रसज्येतेत्याशङ्क्याह। अथवेति॥ तर्हि नात्मश्रुतेरिति न्याय-विरोधः स्यादित्याशङ्क्याह। जीवात्मानमिति॥ तृतीयपादं व्याचष्टे।

घटादिषु प्रलीनेषु घटाकाशादयो यथा।
आकाशे सम्प्रलीयन्ते तद्वज्जीव इहात्मनि ॥४॥
यथैकस्मिन् घटाकाशे रजोधूमादिभिर्युते।

अत उच्यते घटादिवच्च सङ्घातैरुदिति इति । यदा मन्द-बुद्धिप्रतिपिपादयिषया श्रुत्यात्मनो जातिरुच्यते जीवादीनां तद जातावुपगम्यमानायामेतन्निदर्शनं दृष्टान्तो यथोदिताकाशवदित्यादिः ॥३॥

यथा घटाद्युत्पत्त्या घटाकशाद्युत्पत्तिः । यथा च घटादिप्रलये घटाकाशादिप्रलयस्तद्वद्देहादिसङ्घातोत्पत्त्या जीवोत्पत्तिस्तत्प्रलये च जीवानामिहात्मनि प्रलयो न स्वत इत्यर्थः ॥४॥

सर्व्वदेहेष्वात्मैकत्वे एकस्मिन् जननमरणसुखादिमत्यात्मनि सर्व्वात्मनां तत्सम्बन्धः क्रियाफलसाङ्कर्य्यञ्च

तस्मादेवेति ॥ उक्तेऽर्थे वाक्यमवतारयति । अत इति ॥ आकाशस्याव काशप्रदाने च घटाद्युत्पत्तौ कारणत्वं निर्विकारस्यैव दृष्टमिति द्रष्टव्यम् ॥ जातावित्यादेरर्थमाह । यदेति ॥३॥

अद्वैतस्य जीवस्य्टिश्रुतिविरोधं परिहृत्य तस्यैव जीवप्रलयश्रुत्या विरोधमाशङ्क्य परिहरति । घटादिष्विति ॥ औपाधिकौ जीवानामुत्पत्तिप्रलयौ न स्वभाविकौ । तथा चोत्पत्तिश्रुत्या विरोधाभाववदद्वैतस्य प्रलयश्रुत्यापि न विरोधोऽस्तीति श्लोकाक्षरव्याख्यानेन प्रकटयति । यथेत्यादिना ।। ४ ॥

इदानीमद्वैतस्य व्यवस्थानुपपत्त्या विरोधमाशङ्क्य परिहरति । यथैकस्मिन्निति ॥ उक्तदृष्टान्तवशादेकस्मिन् जीवे सुखादिसंयुक्ते सत्य-

न सर्वे सम्प्रयुज्यन्ते तद्वज्जीवा सुखादिभिः ।५।

स्यादिति य आशङ्कितिनस्तान् प्रतीदमुच्यते । यथैकस्मिन घटाकाशे रजोधूमादिभिर्युते संयुक्ते न सर्व्वे घटाकाशाद यस्तद्रजोधूमादिभिः संयुज्यन्ते तद्वज्जीवाः सुखादिभिः । नन्वेक एवात्मा । वाढम् ननु श्रुतं त्वया आकाशवत्सर्व्वसङ्घातेष्वेक एवात्मेति यदि एक एवात्मा तर्हि सर्व्वत सुखी दुखी च स्यात् । न चेदं साङ्ख्यचोद्यं सम्भवति । न हि साङ्ख्य आत्मनः सुखदुःखादीनाम्। न चोपलब्धिस्वरूपस्यात्मनो भेदकल्पनायां प्रमाणमस्ति । भेदाभावे प्रधानस्य परार्थ्यानुपपत्तिरिति चेत् । न । प्रधानकृतस्यार्थस्यात्मन्यसमवायात् । यदि हि प्रधानकृतो वन्धो

परे जीवास्तैरेव सुखादिभिर्न युज्यन्ते औपाधिकभेदादित्याह । तद्वदिति ॥ श्लोकव्यावर्त्त्यामाशङ्कां दर्शयति । सर्वदेहेष्विति ॥ एकात्मेत्र कर्त्तर्य्येकस्मिन् कर्त्तारः सर्वे भोक्तरि चैकस्मिन् भोक्तारः सर्वे भवेयुरित्यव्यवस्थान्तरमाह । क्रियेति ॥ व्यवस्थानुपपत्त्याद्वैतमेष्टव्यमिति वदन्तं प्रत्युत्तरत्वेन श्लोकमवतारयति । तान् प्रतीति ॥ किमिदमैकात्म्ये साङ्कर्य्यं किमेकस्मिन्जीवे व्यवस्थितेन सुखादिना जीवान्तराणां तद्वत्त्वं स्यादित्युच्यते किंवा सर्वोपाधिष्वात्मैक्यात्तस्य स्वरूपेण सर्वसुखादिमत्त्वं स्यादित्यापाद्यते तत्राद्यं प्रत्याह । तद्वदिति॥ आत्मनः सर्वत्रैकत्वात्तस्य स्वरूपेण सर्वसुखादिमत्त्वमिति द्वितीयं पक्षं विवक्षन्नाशङ्कते । नन्विति ॥ सर्वत्रात्मैकत्वमुक्तमङ्गीकरोति । वाढमिति ॥ तदेकत्वमुपपत्तिशून्यं कथमङ्गीकृतमित्याशङ्क्याह । ननुमेति ॥ यदि सर्वत्रैकत्वं नियतमिष्यते तर्हि तत्र तत्र सुखित्वं दुःखित्वं च तस्य

सोऽत्रार्थः पुरुषेषु भेदेन समवैति ततः प्रधानस्य पाराध्य मात्मैकत्वेनोपपद्यत इति युक्ता पुरुषभेदकल्पना न च। सांख्यैरन्यो मोक्षो वार्थः पुरुषसमवेतोऽभ्युपगम्यते। निर्विशेषाश्च चेतनमात्रा आत्मनोऽभ्युपगम्यन्ते। अतः पुरुषसत्तामात्रप्रयुक्तमेव प्रधानस्य पाराध्यं सिद्धं न तु पुरुषभेदप्रयुक्तमिति। अतः पुरुषभेदकल्पनायां प्रधानस्य पाराध्यं हेतुः। न चान्यत्पुरुषभेदकल्पनायां प्रमाणमस्ति सांख्यानाम्। परसत्तामात्रमेव चैतन्निमित्तीकृत्य स्वयं बध्यते मुच्यते च प्रधानम्। परश्चोपलब्धिमात्रसत्तास्वरूपेण प्रधानप्रवृत्तौ हेतुर्न केनचिद्विशेषेणेति। केवलमूढतयैव पुरुषभेदकल्पनावेदार्थपरित्यागश्च।

---

चैकस्य प्राप्तमिति व्यवस्थाऽसिद्धिरिति द्योतयति। यद्येक एवेति॥ आत्मस्वरूपस्य सर्वत्रैकत्वेऽपि कल्पितभेदाद्व्यवस्थासिद्धिरित्यभिप्रेत्य किमिदं साङ्ख्यस्य चोद्यं किं वा वैशेषिकादेरिति विकल्प्याद्यं प्रत्याह। न चेदमिति॥ किञ्चैकात्म्यं दूषयता साङ्ख्येन तद्भेदोऽभ्युपगम्यते। स च नाभ्युपगन्तुं शक्यते तन्मानाभावादित्याह। न चेति॥ प्रधानं हि कस्यचिद्भोगमपवर्गञ्च कस्यचिदादधत् पुरुषशेषमिष्यते। तच्च पुरुषभेदाभावेनोपपद्यते। तेनार्थापत्त्या पुरुषभेदः सिद्ध्यतीति शङ्कते। भेदेति॥ अर्थापत्तेरनुदयं वदन्नुत्तरमाह। नेत्यादिना। सङ्क्षिप्तमेवोक्तं विवृणोति। यदि हीति॥ प्रधानस्य पाराध्यसामर्थ्यादेव पुरुषे कश्चिदतिशयो भविष्यतीत्याशङ्क्यापसिद्धान्तप्रसङ्गान्मैवमित्याह। निर्विशेषा इति॥ किञ्च प्रधानस्य पाराध्यं परं शेषिणमपेक्षते। न तस्मिन् भेदमपि काङ्क्षते। अतोऽन्यथाप्युपपत्तिरित्याह। अत इति॥ जन्ममरणव्यवस्थानुपपत्त्या पुरुषभेदकल्पनमपि न युक्तं व्यधिकरणत्वादिति

ये त्वाहुर्वैशेषिकादय इच्छादय आत्मसमवायिन इति । तदप्यसत् । स्मृतिहेतूनां संस्काराणामप्रदेशवत्यात्मन्यसमवायात् । आत्ममनःसंयोगाच्च स्मृत्युत्पत्तेः स्मृतिनियमानुपपत्तिः । युगपद्वा सर्वस्मृत्युत्पत्तिप्रसङ्गः । न च भिन्नजातीयानां स्पर्शादिहीनानामात्मनां मन आदिभिः सम्बन्धो युक्तः । न च द्रव्याद्रूपादयो गुणाः कर्मसामान्यविशेषसमवाया भिन्नाः सन्ति । परेषां यदि ह्यत्यन्तभिन्ना एव द्रव्यात् स्युरिच्छादयश्चात्मनस्तथा सति द्रव्येण तेषां सम्बन्धानुपपत्तिः । अयुतसिद्धानां समवायलक्षणः सम्बन्धो न विरुध्यत इति चेत् । न । इच्छादिभ्योऽनि-

---

सत्वाह । न चेति ॥ न केवलं प्रमाणशून्या पुरुषभेदकल्पना किन्तु प्रयोजनशून्या चेत्याह । परेति ॥ ननु न पुरुषसत्तामात्रं निमित्तीकृत्य प्रधानं प्रवर्त्तते । किन्त्वीश्वराधिष्ठितमिति सेश्वरादिमतमाशङ्क्य तस्यापि पुरुषत्वाविशेषादुपलब्धिमात्रत्वमभ्युपेत्याह । परस्येति॥ वेदार्थो वेदप्रतिपाद्यमद्वैतं द्वितीयमुत्थापयति । ये त्विति॥ बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मसंस्कारा नव विशेषगुणाः । ते च प्रत्येकमात्मसु व्यवस्थया समवेताः स्वीक्रियन्ते । तेषां व्यवस्थानुपपत्त्या प्रतिदेहमात्मभेदसिद्धिरित्यर्थः । किं बुद्ध्यादयो रूपादिवदात्मव्यापिनः किंवा संयोगादिवदेकदेशवृत्तयः । नाद्यः । ज्ञानादिगुणानामाश्रयव्यापिनामाश्रयसंयुक्ते सर्वस्मिन्नपर्य्यायेण ज्ञातत्वादिव्यवहारजनकत्वप्रसङ्गादित्याह। तदप्यसदिति ॥ द्वितीये त्वेकदेशः सत्योऽसत्यो वा । प्रथमे घटादिवदात्मनः सत्यैकदेशत्वात् कार्य्यत्वादिप्रसङ्गः । द्वितीये कल्पितैकदेशानामेव ज्ञानादिगुणवत्त्वम् आत्मनस्तु न तद्वत्त्वं सिद्ध्यतीत्याह । स्मृतीति ॥

त्वेन आत्मनो नित्यस्य पूर्व्वसिद्धत्वान्नायुतसिद्धत्वोपपत्तिः। आत्मना युतसिद्धत्वे चेच्छादीनामात्मगतमहत्त्ववन्नित्यत्व-प्रसङ्गः। स चानिष्टः। आत्मनोऽनिर्मोक्षप्रसङ्गात्। समवायस्य च द्रव्यादन्यत्वे सति द्रव्येण सम्बन्धान्तरं वाच्यम्। यथा द्रव्यगुणयोः समवायो नित्यसम्बन्ध एवेति न वाच्य-मिति चेत्। तथा च समवायसम्बन्धवतां नित्यसम्बन्धप्रस-ङ्गात्पृथक्त्वानुपपत्तिः। अत्यन्तपृथक्त्वे च द्रव्यादीनां स्पर्श-वदस्पर्शद्रव्ययोरिव षष्ठ्यर्थानुपपत्तिः। इच्छाद्युपजनापाय-वद्गुणवत्त्वे चात्मनो नित्यत्वप्रसङ्गः। देहफलादिवत्सा-वयवत्वं विक्रियावत्त्वञ्च देहादिवदेवेति दोषावपरि-

---

स्मृतिहेतवः संस्कारा भावनाख्यास्तेषां ग्रहणमितरेषामुपलक्षणार्थं तेषामात्मनि समवायाभावात् परस्य सिद्धान्तासिद्धिरिति शेषः। किञ्चात्मनःसंयोगासमवायिकारणाज्ज्ञानानामुत्पत्तिरिष्टा। तथा च सति ग्रहणसमये स्मृतिर्न सम्भवत्येवेति नियमो नोपपद्यते। ग्रहण-कारणसंयोगेनैव स्मृत्युपपत्तिसम्भवादित्याह। आत्मेति॥ किञ्चा-त्ममनसोः संयोगादेकस्मादेकस्याः स्मृतेः समुत्पत्तिसमये स्मृत्यन्तरा-ण्यपि समुत्पद्येरन्। असमवायिकारणस्य तुल्यत्वात्। न च समुत्-पत्तिर्बुद्धिसंस्कारायौगपद्याद्युगपदनुत्पत्तिः। तेषां तदुद्बोधस्य चात्मनि विप्रतिपन्नत्वेन स्मृतिनामकात्मधर्माभावादित्यभिप्रेत्याह। युगप-दिति॥ किञ्च समानजातीयानां स्पर्शादिमताञ्च परस्परं सम्बन्धो दृष्टः। यथा सूत्राणां सेपाणां रज्जुघटादीनाञ्च तदुभयाभावादात्मनां मन आदिभिः सम्बन्धासिद्धेर्नोक्तादसमवायिकारणादिच्छादिगुणोत्पत्तिः सिद्ध्यतीत्याह। न चेति॥ गुणादीनां साजात्यस्य स्पर्शादिमत्त्वस्य चाभावेऽपि द्रव्येण सम्बन्धवदात्मना मनआदिभिः सम्बन्धः सिद्ध्यति

हार्य्यौ । यथा त्वाकाशस्याऽविद्याध्यारोपितरजोधूमसमलत्वा-
दिदोषवत्त्वं तथात्मनोऽविद्याध्यारोपितबुद्ध्याद्युपाधिकृत-
सुखदुःखादिदोषवत्त्वे बन्धमोक्षादयो व्यवहारिका न विरु-
ध्यन्ते । सर्व्ववादिभिरविद्याकृतव्यवहाराभ्युपगमात् पर-

---

षेन्नेत्याह । न चेति ॥ स्वतन्त्रं सत्त्वात्वं द्रव्यशब्देनात्र विवक्षितं न
ततो भेदेन गुणादयो वेदान्तिमते विद्यन्ते । शुक्लः पटः खण्डो गौरि-
त्यादिसामानाधिकरण्यदर्शनात् । द्रव्यमेव तु कल्पनया तत्तदाकारेण
भातीत्यभ्युपगमात् अतो दृष्टान्तासम्प्रतिपत्तिरित्यर्थः ॥ विपक्षे दोष-
माह । यदि हीति ॥ गुणादयो द्रव्यादत्यन्तभिन्ना हिमवद्विन्ध्ययोरिव
यदि स्युर्यदि चात्मनः सकाशादिच्छादयोऽत्यन्तं भिन्ना भवेयुस्तदा गुणा-
दीनां द्रव्येण तद्वदेव सम्बन्धानुपपत्तेः । इच्छादीनाञ्चात्मना तद्यो-
गात्पारतन्त्र्यासिद्धिरित्यर्थः । अत्यन्तभिन्नानामपि समवायसम्बन्धात्-
पारतन्त्र्योपपत्तिरिति शङ्कते । अयुतेति ॥ किमिदमयुतसिद्धत्वम-
पृथक्कालत्वं किं वा पृथग्देशत्वमुताऽपृथक्स्वभावत्वमाहोस्वित्संयोगवि-
भागायोग्यत्वम् । नाद्यः । विकल्पासहत्वात् । किमिच्छाद्यपेक्षयाऽपृथ-
क्कालत्वं किं वात्मापेक्षया इच्छादीनामिति विकल्पाद्यं दूषयति ।
नेत्यादिना ॥ यद्यात्मना सहाऽपृथक्कालत्वमिच्छादीनां तदात्मनोऽनादि-
त्वात्तद्गतमहत्त्ववन्नित्यत्वं तेषामापततीत्याह । आत्मनेति ॥ प्रसङ्गस्येष्ट-
त्वमाशङ्क्य निराचष्टे । न चेति ॥ न चापृथग्देशत्वमयुतसिद्धत्वम् ।
तन्तुपटादीनां पृथग्देशानामयुतसिद्ध्यभावप्रसङ्गात् । न चापृथक्-
स्वभावत्वमयुतसिद्धत्वम् । भेदपक्षपरिक्षयात् । न च संयोगविभागायो-
ग्यत्वमयुतसिद्धत्वम् । देवदत्तस्य हस्तादीनां चायुतसिद्ध्यभावापा-
तादित्यभिप्रेत्य समवायस्य द्रव्यादनन्यत्वे तावन्मात्रत्वेन तत्-
सम्बन्धत्वव्याघातात्ततोऽन्यत्वेन सम्बन्धान्तरमस्ति न वेति विकल्पाद्ये
स्यादनवस्थेति ॥ द्वितीयं शङ्कते । समवाय इति ॥ न वाच्यं सम्बन्धा-
न्तरमिति शेषः । समवायस्य नित्यसम्बन्धत्वे समवायवतां द्रव्यगुणा-

साधीनत्त्व्यपगमाञ्च । तस्मादात्मभेदपरिकल्पना वृथैव तार्किकैः क्रियत इति ॥ ५ ॥

कथं पुनरात्मभेदनिमित्तव्यवहार एकस्मिन्नात्मन्यविद्याकृत उपपद्यत इति । उच्यते । यथेहाकाश एकस्मिन् घटकरकापवरकाद्याकाशनामल्पत्वमहत्त्वादिरूपाणि भिद्यन्ते तथा कार्य्यमुदकाहरणधारणशयनादिसमाख्याश्च

दीनामपि तद्वत्त्वात् । भेदस्य कदाचिदप्यनुपलम्भात् वृथक्त्वप्रयानुपपत्तिरिति दूषयति । तथा चेति ॥ संयोगस्यापि समवायसाम्यं चकारेण सूच्यते । समवायस्य समवायिभिर्गुणादीनाञ्च द्रव्येणात्यन्तभेदे हिमविन्ध्ययोरिव सम्बन्धानुपपत्तेः । तेषु परतन्त्रताव्यवहारासिद्धिरित्याह । अत्यन्तेति ॥ किञ्चेच्छादयो नात्मगुणाः उपजनापायवत्त्वाद्रूपादिवत् । यद्वाऽऽत्मा नानित्यगुणवान्नित्यत्वाद्व्यतिरेकेण देहादिदित्याह । इच्छादीति । न केवलमात्मनोऽनित्यगुणत्वेऽनित्यत्वप्रसङ्गरेव दोषः किन्त्वन्यदपि दोषद्वयं दुष्परिहरमिति बाधकान्तरमाह । सावयवत्वमिति ॥ यद्यात्मनो नेच्छादिगुणवत्त्वं तदा तस्य बन्धाभावान्मोचो न स्यादतो बन्धमोक्षव्यवस्थानुपपत्त्या प्रति देहं सुखदुःखादिविशिष्टात्मभेदसिद्धिरित्याशङ्क्याह । यथा त्विति ॥ अवस्तुत्वादविद्यायास्तत्कृतव्यवहारायोगाद्व्यवहारिकबन्धाद्यभ्युपगमासिद्धिरित्याशङ्क्याह । सर्व्ववादिभिरिति ॥ अविद्याकृतमनुभवत्वाध्यारोपेण लौकिकवैदिकव्यवहारः सर्व्ववादिभिरिष्यते तत्कृता च व्यवस्था स्थीयते ॥ तस्मादस्माकमपि तथैव सर्व्वमविरुद्धमित्यर्थः । परमार्थे च मोक्षे केनापि वादिना व्यवहारो नाभ्युपगम्यते । तथा च मोक्षे परेषां व्यवहारस्यैवाभावात्तन्निर्वाहकपारमार्थिकभेदाभ्युपगमो वृथेत्याह । परमार्थेति॥ कल्पितभेदवशादपि पूर्व्वोक्तसर्व्वव्यवस्थासौस्थ्यात् पारमार्थिकात्मभेदकल्पनाप्रमाणप्रयोजनशून्येत्युपसंहरति । तस्मादिति ॥५॥

रूपकार्य्यसमाख्याश्च भिद्यन्ते तत्र तत्र वै।
आकाशस्य न भेदोऽस्ति तद्वज्जीवेषु निर्णयः॥६॥

---

घटाकाशकरकाकाश इत्याद्याख्यातत्कृताश्च भिन्नाश्च दृश्यन्ते। तत्र तत्र वै व्यवहारविषय इत्यर्थः। सर्वोऽयमाकाशरूपादिभेदकृतो व्यवहारो न परमार्थ एव। परमार्थतस्त्वाकाशस्य भेदोऽस्ति। न चाकाशभेदनिमित्तो व्यवहारोऽस्त्यन्तरेण परोपाधिकृतं द्वारं यथैतत्। तद्वद्देहोपाधिभेदकृतेषु जीवेषु घटाकाशस्थानीयेष्वात्मसु निरूपणात्कृतो बुद्धिभिर्निर्णयो निश्चय इत्यर्थः॥६॥

---

अद्वैतस्य श्रुत्यादिविरोधाभावेऽप्यनुमानविरोधमाशङ्क्यानैकान्तिकत्वेनानुमानं दूषयति। रूपेति॥ श्लोकव्यावर्त्त्यामाशङ्कामाह। कथमिति॥ यथात्मभेदवादे तद्भेदनिमित्तो रूपादिव्यवहारस्तथैकस्मिन्नेवात्मन्यात्मैक्यपक्षे रूपादिव्यवहारो नोपपद्यते। तथा च विमता जीवास्तत्त्वतो भिद्यन्ते भिन्ननामकत्वात्। भिन्नकार्यकरत्वाद्भिन्नरूपत्वाद्घटपटादिवदित्यनुमानविरुद्धमद्वैतमित्यर्थः। घटाकाशादिष्वनैकान्तिकत्वं विवक्षितत्वात्॥ श्लोकाक्षराणि व्युत्पादयति। उच्यत इत्यादिना॥ शयनादिसमाख्याश्च भिद्यन्त इति सम्बन्धः। तत्कृताश्चेत्यत्र तच्छब्देन विकल्पितो घटाकाशभेदोऽभिधीयते। चकारोऽवधारणार्थः। घटाकाशादीनामुक्तहेतुत्वेऽपि विपक्षत्वाभावे कथमनैकान्तिकत्वमित्याशङ्क्याह। सर्वोऽयमिति॥ उक्तेऽर्थे तृतीयं पादं विभजते। न चेति॥ परोपाधिशब्देन घटकरकादिरुच्यते। दृष्टान्तमनूद्य दार्ष्टान्तिकं व्याचष्टे। तथैतदित्यादिना॥६॥

नाकाशस्य घटाकाशो विकारावयवौ यथा ।
नैवात्मनः सदा जीवो विकारावयवौ तथा ॥ ७ ॥

ननु तत्र परमार्थकृत एव घटाकाशादिषु रूपकार्य्यादिभेदव्यवहार इति । नैतदस्ति । यस्मात्परमार्थाकाशस्य घटाकाशो न विकारः । यथा सुवर्णस्य रुचकादिर्यथा वाऽपां फेनबुद्बुदहिमादिर्नाप्यवयवः । यथा च वृक्षस्य शाखादिः । न तथाऽऽकाशस्य घटाकाशः । विकारावयवौ यथा तथा नैवात्मनः परस्य परमार्थसतो महाकाशस्थानीयस्य घटाकाशस्थानीयो जीवः सदा सर्व्वदा यथोक्तदृष्टान्तवन्न विकारो नाप्यवयवः । अत आत्मभेदकृतव्यवहारो मृषैवेत्यर्थः ॥ ७ ॥

घटाकाशादीनां विपक्षत्वाभावमाशङ्क्य परिहरति । नेत्यादिना ॥ घटाकाशादिराकाशस्य विकारोऽवयवो वेत्यङ्गीकारात्तत्रापि भेदस्य तात्त्विकत्वान्न विपक्षतेति श्लोकस्य व्यावर्त्त्यं चोद्यमुत्थापयति । नन्विति ॥ आकाशस्य निर्व्विकारत्वं निरवयवत्वञ्च लोकसिद्धं गृहीत्वा परिहरति । नैतदस्तीति ॥ तत्र वैधर्म्योदाहरणद्वयमाह । यथेति ॥ घटाकाशादिराकाशाख्यस्य महाकाशस्यावयवो न भवतीत्यत्र व्यतिरेकदृष्टान्तमाह । यथा वृक्षस्येति ॥ उक्तदृष्टान्तानां दार्ष्टान्तिकमाह । न तथेति ॥ घटाकाशस्य महाकाशं प्रति विकारत्वमवयवत्वञ्च नास्तीत्युक्तम् ॥ दृष्टान्तत्वेनानूद्य दार्ष्टान्तिकं दर्शयन्नुत्तरार्द्धं व्याकरोति ॥ यथेत्यादिना ॥ अनेकान्तिकत्वेनानुमानस्याभानत्वं स्थितं फलितमाह । अत इति ॥ ७ ॥

**यथा भवति बालानां गगनं मलिनं मलैः ।**
**तथा भवत्यबुद्धानामात्माऽपि मलिनो मलैः ॥ ८ ॥**

यस्माद्यथा घटाकाशादिभेदबुद्धिनिबन्धनो रूपकार्य्यादिभेदव्यवहारस्तथा देहोपाधिजीवभेदकृतो जन्ममरणादिव्यवहारः तस्मात्तत्कृतमेव क्लेशकर्म्मफलमलवत्त्वमात्मनो न परमार्थत इत्येतमर्थं दृष्टान्तेन प्रतिपिपादयिषन्नाह । यथा भवति लोके बालानामविवेकिनां गगनमाकाशं घनरजोधूमादिमलैर्मलिनं मलवन्न गगनं मलवत् तद्याथात्म्यविवेकिनाम् । तथा भवत्यात्मा परोऽपि यो विज्ञाता प्रत्यक् क्लेशकर्म्मफलमलैर्मलिनोऽबुद्धानां प्रत्यगात्मविवेकरहितानां नात्मविवेकवताम् । न ह्यूषरदेशस्तृड्वत्प्राण्यध्यारोपितोदकफेनतरङ्गादिमान् । तथा

जीवो ब्रह्मणो नांशो न विकारोऽपि तु ब्रह्मैवोपाध्यनुप्रविष्टं जीवशब्दितमित्युक्तं ब्रह्मणः शुद्धत्वाज्जीवस्य रागादिमलवत्त्वादनेकत्वादेकत्वायोगादित्याशङ्क्य परमार्थतो जीवस्यापि नास्ति मलत्वमित्याह । तथेति ॥ श्लोकस्य तात्पर्य्यमाह । यस्मादिति ॥ घटाकाशो मठाकाशः सूचीपाशाकाशश्चेति उपाधिनिमित्तो भेदस्तद्विषया च द्विस्तत्प्रयुक्तो रूपभेदोऽर्थक्रियाभेदो नामभेदश्चेति व्यवहारो नभसि यथोपलभ्यते तथा देहाद्युपाधिभेदप्रयुक्तो जीवभेदस्तत्कृतो जननमरणसुखदुःखादिव्यवहारो व्यवस्थितो यस्मादास्थीयते तस्मात्तेनाविद्यमानेन कृतमेवात्मनो रागादिमलत्वं न वस्तुतोऽस्तीत्येतमर्थं दृष्टान्तद्वारा प्रतिपिपादयिषन्नादौ दृष्टान्तमाहेति योजना । दृष्टान्तभागनिविष्टान्यक्षराणि व्याचष्टे । यथेत्यादिना ॥ दार्ष्टान्तिकभागगता-

मरणे सम्भवे चैव गत्यागमनयोरपि ।
स्थितौ सर्वशरीरेषु आकाशेनाविलक्षणः ॥९॥
सङ्घाताः स्वप्नवत्सर्वे आत्ममायाविसर्जिताः ।

---

नात्मा अबुधारोपितकर्मादिमलैर्मलिनो भवतीत्यर्थः ॥८॥

पुनरप्युक्तमेवार्थं प्रपञ्चयति घटाकाशजन्मनाशगमनागमनस्थितिवत्सर्वशरीरेष्वात्मनो जन्ममरणादिराकाशेनाविलक्षणः प्रत्येतव्य इत्यर्थः ॥९॥

घटादिस्थानीयास्तु देहादिसङ्घाताः स्वप्नदृश्यदेहादिवन्मायाविकृतदेहादिवच्चात्मयाविवर्जिता आत्मनो माया

---

नामक्षराणामर्थमाह । तयेति ॥ यो हि प्रत्यगात्मा विज्ञाता सोऽप्यबुद्धानां मलिनो भवतीति सम्बन्धः ॥ अबुद्धानामित्येतद्व्याचष्टे ॥ प्रत्यगात्मेति ॥ अविवेकिभिरध्यारोपितेऽपि प्रत्यगात्मनो मलवत्त्वे मलप्रयुक्तं फलं तत्र वास्तवं भविष्यतीत्याशङ्क्याह । न हीति ॥८॥

ननु जीवो मरणानन्तरं धर्मानुरोधेन स्वर्गं गच्छति । अधर्मवशाच्च नरकं प्रतिपद्यते । धर्माधर्मयोश्च भोगेन क्षये पुनरागत्य योनिविशेषे सम्भवति । तत्र यावद्भोगं स्थित्वा पुनरपि परलोकाय प्रतिष्ठते । एवमिहलोकपरलोकसञ्चरणव्यवहारविरुद्धमद्वैतमिति तत्राह । मरण इति ॥ श्लोकस्य तात्पर्यमाह । पुनरपीति ॥ आत्मनि सर्वो व्यवहारोऽविद्याकृतो वास्तवो नेत्युक्तोऽर्थः । आत्मनो हि गगनोपमस्य गत्यादेर्वस्तुतोऽसम्भवादविद्याकृतस्तस्मिन् गत्यादिरित्यर्थः ॥९॥

ननु सङ्घातशब्दितानामुपाधीनां सत्यत्वात्तत्प्रयुक्तभेदस्यापि तथात्वादात्मदानुपपत्तितादवस्थ्यमिति चेत्तत्राह । सङ्घाता इति ॥ देवा-

आधिक्ये सर्वसाम्ये वानोपपत्तिर्हि विद्यते ॥१०॥
रसादयो हि ये कोशा व्याख्यातास्तैत्तिरीयके ।

ऽविद्या तया प्रत्युपस्थापिता न परमार्थतः सन्तीत्यर्थः ।
यद्याधिक्यमधिकभावस्तिर्य्यग्देहाद्यपेक्षया देवादिकार्य्यकरणसङ्घातानां यदि वा सर्व्वेषां समतैव नैवासुपपत्तिसम्भवः सद्भावप्रतिपादको हेतुर्विद्यते । नास्ति हि यस्मात्तस्मादविद्याकृता एव परमार्थतः सन्तीत्यर्थः ॥१०॥

उत्पत्त्यादिवर्जितस्याद्वयस्यात्मतत्त्वस्य श्रुतिप्रमाणकत्वप्रदर्शनार्थं वाक्यान्युपन्यस्यन्ते । रसादयोऽन्नरसमयः प्राणमय इत्येवमादयः कोशा इव कोशा अस्यादेरिवोत्तरोत्तरस्यापेक्षया वहिर्भावात्पूर्व्वस्य व्याख्याता विस्पष्ट

टिदेहानां पूज्यतमत्वेनाधिक्याभ्युपगमान्नासत्वत्वसिद्धिरित्याशङ्क्य देहभेदेषु चिदाधिक्यं मूढदृष्ट्या कल्पितेऽपि विवेकदृष्ट्या सर्व्वदेहापञ्चभूतात्मकत्वाविशेषादशेषासाम्ये वा स्वीकृते नास्ति सङ्घातेषु सत्यत्वे काचिदुपपत्तिरित्याह । आधिक्य इति ॥ पूर्वार्द्धाक्षराणि योजयति ॥ घटादीति ॥ मणिमन्त्रादिरूपां मायामिन्द्रजालप्रयोजकभूतां व्यावर्त्तयति । अविद्येति ॥ विमता देहा न सत्या देहत्वात्सम्प्रतिपन्नवदित्यर्थः ॥ ब्रह्मादिदेहानामुत्कृष्टत्वान्नाविद्याकृतत्वमित्याशङ्क्य द्वितीयार्द्धं व्याचष्टे । यदीत्यादिना ॥१०॥

जीवस्याद्वितीयब्रह्मत्वमुपपत्त्यवष्टम्भेनोपपादितम् । इदानीन्तत्र तैत्तिरीय श्रुतेस्तात्पर्य्यमाह । रसादयो हीति ॥ श्लोकस्य तात्पर्य्यमाह । उत्पत्त्यादिति ॥ अक्षरार्थं कथयति । रसादय इति ॥ आदिशब्देन मनोमयविज्ञानमयानन्दमया गृह्यन्ते । खड्गादेर्यथा

तेषामात्मा परो जीवः खं यथा संप्रकाशितः ॥११॥
द्वयोर्द्वयोर्मधुज्ञाने परं ब्रह्म प्रकाशितम् ।

---

माख्यातास्तैत्तिरीयकशाखोपनिषद्वल्यां तेषां कोशाना-मात्मा येनात्मना पञ्चापि कोशा आत्मवन्तोऽन्तरतमेन । स हि सर्वेषां जीवननिमित्तत्वाज्जीवः । कोऽसावित्याह । पर एवात्मा यः पूर्वं सत्यं ज्ञानमनन्तं ब्रह्मेति प्रकृतः । यस्मादात्मनः स्वप्नमायादिवदाकाशादिक्रमेण रसादयः कोशलक्षणाः सङ्घाता आत्ममायाविसर्जिता इत्युक्तम् । स आत्माऽस्माभिर्यथा खं तथेति संप्रकाशितः । आत्मा ह्याकाशवदित्यादिश्लोकैः । न तार्किकपरिकल्पितात्मवत्-पुरुषबुद्धिप्रमाणगम्य इत्यभिप्रायः ॥११॥

किञ्चाधिदैवमध्यात्मञ्च तेजोमयोऽमृतमयः पुरुषः पृथिव्याद्यन्तर्गतो यो विज्ञाता पर एवात्मा ब्रह्म सर्व-

---

कोशात्तदपेक्षया वहिर्भवन्ति तद्देते पञ्च कोशा व्यपदिश्यन्ते ॥ तत्र हेतुमाह । उत्तरोत्तरस्येति ॥ पूर्वपूर्वस्यान्नमयादेरुत्तरोत्तरप्राण-मयाद्यपेक्षया वहिर्भावात् ब्रह्म सर्वान्तरं प्रतिष्ठाभूतमपेक्ष्यानन्दमय-स्यापि वहिर्भावा विशेषादविशिष्टं पञ्चानामपि कोशत्वमित्यर्थः ॥ अवशिष्टान्यक्षराणि व्याचष्टे । व्याख्याता इत्यादिना । तत्र जीवशब्द प्रवृत्तिं व्युत्पादयति । स हीति ॥ विशिष्टं जीवशब्दार्थमाकाङ्क्षाद्वारा व्यावर्त्तयति । कोऽसावित्यादिना ॥ प्रकरणविच्छेदनार्थं प्रकारणमनु-सन्धत्ते । यस्मादिति ॥ प्रकृतस्य परस्यात्मनः श्रौतत्वे फलितमाह । नेत्यादिना ॥११॥

मनुष्योऽहं प्राणोऽहं प्रमाताऽहं कर्त्ताऽहं भोक्ताऽहमिति

पृथिव्यामुदरे चैव यथाऽऽकाशः प्रकाशित ॥१२॥

---

मिति द्वयोर्द्वयोरद्वैतक्षयात् परं ब्रह्म प्रकाशितम्।
क्वेत्याह। ब्रह्मविद्याख्यं मधुभूतं अमृतत्वं मोदनहेतुत्वा-
द्विज्ञायते यस्मिन्निति मधुज्ञानं मधुब्राह्मणं तस्मिन्नि-
त्यर्थः॥ किमिवेत्याह। पृथिव्यामुदरे चैव यथैक आकाशो-
ऽनुमानेन प्रकाशितो लोके तद्वदित्यर्थः॥१२॥

---

पञ्चानां विशिष्टानां यदेकं स्वरूपमनुगतं प्रत्यक्चैतन्यं तद्ब्रह्मैवेति जीवात्मपरयोरैक्यं तैत्तिरीयश्रुतेस्तात्पर्यमुक्तम्। तत्रैव बृहदारण्यकश्रुतेरपि तात्पर्यमाह। द्वयोरिति। मधुब्राह्मणे चतुर्षु पर्यायेषु अधिदैवाध्यात्मविभक्तयोः स्थानयोरयमेव स इति परं ब्रह्म प्रत्यक् प्रकाशितम्। अतोऽस्मिन् बृहदारण्यकश्रुतेरपि ब्रह्मात्मैक्ये तात्पर्यमित्यर्थः॥ तत्र दृष्टान्तमाह। पृथिव्यामिति॥ न केवलमैक्ये तैत्तिरीयश्रुतिरेव तात्पर्यं किन्तु बृहदारण्यकश्रुतेरपीत्याह। किञ्चेति॥ अधिदैवं पृथिव्यादावध्यात्मञ्च शरीरे तेजोमयो ज्योतिर्म्मयश्चैतन्यप्रधानोऽमृतमयोऽमरणधर्मा पुरुषः पूर्णः पृथिव्यादौ शरीरे चान्तर्गतो यो विज्ञाता स पर एवात्मा। तेन स विज्ञाता सर्वं पूर्णमपरिच्छिन्नं ब्रह्मैवेति परं ब्रह्मप्रकाशितमिति सम्बन्धः। अपवादावस्थायामध्यारोपासम्भवात् द्वयोर्द्वयोरिति कथमुच्यते तत्राह। अद्वैतक्षयादिति॥ द्वैतक्षयपर्य्यन्तं ब्रह्म प्रकाशितम्। द्वयोर्द्वयोरिति पुनरनुवादमात्रमित्यर्थः। मधुज्ञाने सर्व्वं प्रकाशितं न ब्रह्म इत्याशङ्क्य मधुज्ञानशब्दार्थं व्युत्पादयति। क्वेत्यादिना॥ शब्दस्य क्वचिदाश्रितत्वं रूपवदनुमीयते। तच्च शब्दाधिकरणं सामान्यतः सिद्धं पारिशेष्यादाकाशमिति सिद्धमिति। तच्च कल्पनालाघवादेकमेवेति गम्यते। तथा च बहिरन्तश्चैकमेवाकाशमनुमानप्रामाण्यादधिगतम्॥ तथाधिदैवमध्यात्मञ्च ब्रह्म प्रत्यग्भूतं सिद्धमित्युत्तरार्द्धं व्याचष्टे। किमेवेत्यादिना॥१२॥

जीवात्मनोरनन्यत्वमभेदेन प्रशस्यते ।
नानात्वं निन्द्यते यच्च तदेवं हि समञ्जसम् ॥१३॥

---

यद्युक्तितः श्रुतितश्च निर्द्धारितं जीवस्य परस्य चात्मनोरनन्यत्वमभेदेन प्रशस्यते स्तूयते शास्त्रेण व्यासादिभिश्च। यच्च सर्व्वप्राणिसाधारणं स्वाभाविकं शास्त्रबहिष्कृतैः कुतार्किकैर्विरचितं नानात्वदर्शनं निन्द्यते । न तु तद्द्वितीयमस्ति । द्वितीयाद्वै भयं भवति । उदरमन्तरं कुरुते । अथ तस्य भयं भवति । इदं सर्व्वम् । यदयमात्मा । मृत्योः स मृत्युमाप्नोतीत्यादिवाक्यैश्चान्यैश्च ब्रह्मविद्भिः । यच्चैतत्तदेवं हि समञ्जसं सम्यगवबोधं न्याय्यमित्यर्थः । यास्तु

---

इतश्चैकत्वे श्रुतीनां तात्पर्य्यमित्याह । जीवात्मनोरिति ॥ अभेदेन ब्रह्मैव सन्ब्रह्माप्येति भवतीत्यादिना ब्रह्मभावफलवादेनेत्यर्थः । यत् प्रशस्यते तद्विधेयमित्यादिन्यायात् । एकत्वदर्शन फलवादोपपत्त्युपलम्भादेकत्वं प्रशस्तत्वाद्विवक्षितमिति भावः । यच्चानेकत्वं सर्व्वप्राणिसाधारणं तन्निन्द्यमानं दृश्यते । यन्निन्द्यते तन्निषिध्यत इति न्यायान्नानात्वं शास्त्रार्थो न भवतीत्याह । नानात्वमिति ॥ तदुभयमेकत्वप्रशंसनं नानात्वनिन्दनञ्चैकत्वमेव शास्त्रीयमित्यभ्युगमे सति युक्तमिति फलितमाह । तदेवं हीति ॥ श्लोकाक्षराणि व्याचष्टे । यदिति ॥ अनन्यत्वाभावशङ्कां व्यावर्त्त्यैकरसत्वं दर्शयति । अभेदेनेति ॥ तत्प्रशस्यते शास्त्रेणेति तत्पदमादाय व्याख्येयम् । शास्त्रेणाभेदवेदनेन फलवादेनेत्यर्थः । व्यासपराशरादिभिश्च वेदार्थं व्याचक्षाणैरेकत्वं स्तूयते ॥ वासुदेवः सर्व्वमिति स महात्मा सुदुर्लभः । अहं हरिः सर्व्वमिदं जनार्दनो नान्यत्ततः कारणकार्य्यजातमित्यादिवाक्यैरित्याह।

तार्किकपरिकल्पिताः कुदृष्टयस्ता अन्त्यो निरूप्यमाणा न घटाना प्राञ्चन्तीत्यभिप्रायः ॥१३॥

ननु अत्यापि जीवपरमात्मनोः पृथक्त्वं यत्प्रागुत्पत्ते-रुत्पत्त्यर्थोपनिषद्वाक्येभ्यः पूर्वं प्रकीर्त्तितं कर्म्मकाण्डे । अनेकशः कामभेदत इदंकामोऽदःकाम इति । परस्य सदाधारपृथिवीद्यामित्यादिमन्त्रवर्णैः । तत्र कथं कर्म्मज्ञा-नकाण्डवाक्यविरोधे ज्ञानकाण्डवाक्यार्थस्यैवैकत्वस्य साम-ञ्जस्यमवधार्य्यत इति । अत्रोच्यते ॥ यतो वा इमानि

व्यासादिभिश्चेति ॥ द्वितीयार्द्धं विभजते । यच्चेति ॥ तन्निन्द्यत इति यच्छब्देनोपक्रमाद्द्रष्टव्यम् । अविद्यामोहितात्मानः पुरुषा भिन्नद-र्शिनः । किन्तेन न कृतं पापं चौरेणात्मापहारिणेत्यादिवाक्यैर्व्यासाद-योऽपि द्वैतदर्शनं निन्दन्तीत्याह । अन्यैश्चेति ॥ एवमनेकत्वदर्शनस्य निन्दितत्वेन निषिद्धत्वान्नानेकत्वं शास्त्रीयमित्युक्त्वा चतुर्थपादार्थमाह । यश्चैतदिति ॥ विषयभेदेन प्रशंसनं निन्दनञ्चेत्यर्थः । एवं हीति ॥ द्वैतस्याशास्त्रीयत्वमद्वैतस्यैव तत्तात्पर्य्यगम्यत्वमित्यङ्गीकारे सती-त्यर्थः । भेददृष्टितामपि न्याय्यत्वाविशेषाद्भेददर्शननिन्दनस्य कुतो न्याय्य-त्वमित्याशङ्क्याह । यास्त्विति ॥ या वेदवाह्याः स्मृतयो याश्च काश्च कुदृष्टयः । सर्व्वास्ता निस्फलाः प्रेत्यतमोमूला हि ताः स्मृता इति मनुव-चनादित्यर्थः । न्यायविरोधादपि भेदवादानामसमञ्जसत्वमित्याह । निरूप्यमाणा इति । वैशेषिकवैनाशिकादिकल्पना भेदानुसारिण्यां भेदस्य परस्पराश्रयतादिदोषदूषिता न प्रमीयते । तेन भेदवादानामुत्-प्रेक्षामूलानामसमञ्जसतेत्यर्थ ॥१३॥

भेदवादानामुत्प्रेक्षामात्रमूलत्वं श्रुतिमूलत्वादित्याशङ्क्य परि-हरति । जीवात्मेति ॥ उत्पत्तिर्व्युत्पत्तिः सम्यक् ज्ञानं तदर्थोपनि-

जीवात्मनोः पृथक्त्वं यत्प्रागुत्पत्तेः प्रकीर्त्तितं ;

---

भूतानि जायन्ते । यथाऽग्नेःक्षुद्रा विस्फुलिङ्गाः । तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः । तदैक्षत । तत्तेजोऽसृजतेत्याद्युत्पत्त्यर्थोपनिषद्वाक्येभ्यः प्राक् पृथक्त्वं कर्म्मकाण्डे प्रकीर्त्तितं यत्तन्न परमार्थं किन्तर्हि गौणम् । महाकाशघटाकाशादिभेदवत् । यथौदनं पचतीति भविष्यद्वृत्त्या तद्वत् । न हि भेदवाक्यानां कदाचिदपि मुख्यभेदार्थत्वमुपपद्यते । स्वाभाविकाविद्यावत् प्राणिभेददृष्ट्यनुवादित्वादात्मभेदवाक्यानाम् । इह चोपनिषत्सूत्पत्ति-

---

पदः प्रवृत्त्यपेक्षया प्राक्प्रवृत्तकर्म्मकाण्डेन यत्परापरयोर्नानात्वमुक्तं तदोदनं पचतीति भविष्यत्प्रवृत्त्या तण्डुलेष्वोदनत्ववत् गौणमेव न मुख्यभेदार्थत्वं श्रुतेर्युज्यते । भेदस्यापूर्व्वत्वपुरुषार्थत्वयोरभावादित्यर्थः । श्लोकव्यावर्त्त्यामाशङ्कामाह । नन्विति ॥ न जीवात्मनस्स्वाभिरुत्प्रेक्षितमिदं किन्तु श्रुत्यापि दर्शितमित्यपरोऽर्थः । भेदवत्त्वाः श्रुतेस्तात्पर्य्यलिङ्गमभ्यासं सूचयति । अनेकश इति । कर्म्मकाण्डे तत्तत्कामनाभेदेन नियोज्यभेदसिद्धावपि कथं जीवपरयोर्भेदः सिध्यति परस्य तत्रानुक्तत्वादित्याशङ्क्याह ॥ परस्येति ॥ हिरण्यगर्भः समवर्त्तताग्र इति मन्त्रप्रकृतो हिरण्यगर्भः सर्व्वनाम्ना परामृश्यते । स इमां पृथीवीं द्यामपि धृतवान् । अन्यथा गुरुत्वात्तयोरवस्थानायोगात् । न च हिरण्यगर्भातिरिक्तमीश्वरं परे बुध्यन्ते मन्त्रवर्णैः । परस्य प्रकीर्त्तित इति सम्बन्धः । कर्म्मकाण्डार्थं ज्ञानकाण्डेनापबाध्यज्ञानकाण्डार्थस्यैवैकत्वस्य सासङ्गस्यमवधार्य्यतामित्याशङ्क्य बाध्यबाधकभावनिर्द्धारणे कारणानवधारणान्नैवमित्याह । तत्रेति ॥ श्लोका-

भविष्यद्वृत्त्या गौणं तन्मुख्यत्वं हि न युज्यते ॥१४॥

---

प्रलयादिवाक्यैर्जीवपरमात्मनोरेकत्वमेव प्रतिपिपादयिषितम् । तत्त्वमसि अन्योऽसावन्योऽहमस्मीति न स वेदेत्यादिभिः । अत उपनिषत्स्वेकत्वं श्रुत्या प्रतिपादयिषितं भविष्यतीति भाविनीमेकत्ववृत्तिमाश्रित्य लोके भेददृष्ट्यनुवादो गौण एवेत्यभिप्रायः । अथवा तदैक्षत । तत्तेजोऽसृजतेत्याद्युत्पत्तेः प्रागेकमेवाद्वितीयमित्येकत्वं प्रकीर्त्तितम् । तदेव च तत्सत्यं स आत्मा तत्त्वमसीत्येकत्वं

---

चरैकत्तरमाह । अत्रेत्यादिना ॥ पृथक्त्वस्य गौणत्वे प्रागुक्तमेव दृष्टान्तमाह । महाकाशेति ॥ तत्रैव श्लोकसूचितमुदाहरणमाह । यथेति मुख्यत्वं हीत्यादिना व्याचष्टे । न हीति ॥ भेदस्यापूर्वत्वाद्यभावान्न वाक्यानां तत्परत्वं तत्परातत्परयोश्च तत्परं वाक्यं बलवदिति न्यायादखण्डवाक्यार्थस्यैव सामञ्जस्यमित्यर्थः ॥ अद्वैतवाक्यानामपि कथमद्वैते तात्पर्यमित्याशङ्क्यापूर्वार्थत्वादुपपत्तिमत्त्वाच्चेत्याह । इह चेति ॥ अद्वैतं तावन्मानान्तरागोचरत्वादपूर्वमेवाद्वितीयमिति प्रागवस्थायां ब्रह्माद्वितीयं श्रुतम् । तद्वेदं सृष्ट्वा । तत्सृष्ट्वा तदेवानुप्राविशदिति श्रुतेरनुप्रविष्टो जीवोऽभिलप्यते । तेन जीवस्य ब्रह्मता सम्भवतीत्युपपत्त्यापि श्रुतेरद्वैतार्थत्वं गम्यते । सृष्ट्यादिश्रुतीनामद्वैते तात्पर्यं न सृष्ट्यादावित्यनन्तरमेव वक्ष्यते । तस्मादद्वैते श्रुतेस्तात्पर्यात्तदर्थस्यैव तात्त्विकतेत्यर्थः । न केवलमुपपत्तेरेवाद्वैते श्रुतेस्तात्पर्यं किन्तु नवकृत्वोऽभ्यासादपीत्याह । तत्त्वमसीति । भेददृष्टेरपवादाच्च श्रुतेरद्वैते तात्पर्यं प्रतिभातीत्याह । अन्योऽसाविति ॥ आदिशब्देनाद्वैतवादीनि द्वैतनिषेधानि च वचनान्तराणि च गृह्यन्ते । एकत्व-

मृल्लोहविस्फुलिङ्गाद्यैः सृष्टिर्या चोदिताऽन्यथा।

भविष्यतीति तां भविष्यद्वृत्तिमपेक्ष्य यज्जीवात्मनोः पृथक्त्वं यत्र क्वचिद्वाक्ये गम्यमानं तद्गौणम् । यथौदनं पचतीति तद्वत् ॥ १४ ॥

ननु यद्युत्पत्तेः प्रागजं सर्व्वमेकमेवाद्वितीयं तथाप्युत्पत्तेरूर्द्ध्वं जातमिदं सर्वं जीवाश्च भिन्ना इति । मैवम् । अन्यार्थत्वादुत्पत्तिश्रुतीनाम् । पूर्व्वमपि परिहृत एवायं दोषः । स्वप्नवदात्ममायाविसर्जिताः सङ्घाताः घटाकाशोत्पत्तिभेदादिवज्जीवानामुत्पत्तिभेदादिरिति । इत एवोत्पत्तिभेदादिश्रुतिभ्य आकृष्येह पुनरुत्पत्तिश्रुतीनामै-

मैव प्रतिपिपादयिषितमिति पूर्वेण सम्बन्धः ॥ एकत्वे श्रुतेस्तात्पर्य्ये सिद्धे तृतीयपादावष्टम्भेन फलितमाह । अत इति ॥ श्लोकस्य साध्याहारं व्याख्यानान्तरमाह । अथ वेत्यादिना ॥ १४ ॥

सृष्ट्यादिश्रुतिषु शब्दशक्तिवशादेव सृष्ट्यादिभेददृष्टेरद्वैतानुपपत्तिरित्याशङ्क्याह । मृल्लोहेति ॥ उत्पत्त्यादिश्रुतीनां स्वार्थनिष्ठत्वमुपेत्य व्यावर्त्त्यचोद्यमुत्थापयति । नन्विति ॥ तासां स्वार्थनिष्ठत्वाभावान्निरवकाशश्चोद्यमिति परिहरति । मैवमिति ॥ परिहृतत्वाच्च नेदं चोद्यं सावकाशमित्याह । पूर्वमपीति ॥ यदि प्रकृतोत्पत्त्यादिश्रुतिभ्यः सकाशादुपक्रमोपसंहारैकरूप्यं तात्पर्य्यलिङ्गमाकृष्योद्भाव्य तथा सृष्ट्यादिश्रुतेः स्वार्थपरत्वं परिहृतं तर्हि पुनरुपन्यासो वृथा स्यादित्याशङ्क्ते । इत एवेति ॥ उत्पत्त्यादिश्रुतीनां मिथ्यासृष्टिपरत्वं पूर्व्वमुक्तम् । इह तु तासां ब्रह्मात्मैक्ये तात्पर्य्यप्रतिपादनेच्छया पुनरुपन्यासः सिद्धान्तीत्युत्तरमाह । इह पुनरिति ॥ पादत्रयगतान्यक्षराणि

उपायः सोऽवताराय नास्ति भेदः कथञ्चन॥१५॥

------

दं पारम्पर्य्यप्रतिपिपादयिषयोपन्यासः। मृल्लोहविस्फुलिङ्गादिदृष्टान्तोपन्यासैः सृष्टिर्या चोदिता प्रकाशिता अन्यथ च स सर्व्वः सृष्टिप्रकारो जीवपरमात्मैकत्वबुद्ध्यवतारायोपायोऽस्माकम्। यथाप्राणसंवादे वागाद्यासुरपाप्मवेधाद्याख्यायिका कल्पिता प्राणवैशिष्ट्यबोधावताराय तदप्यसिद्धमिति चेत्। न। शाखाभेदेष्वन्यथा च प्राणादिसंवाद श्रवणात्। यदि हि वादः परमार्थ एवाभूदेकरूप एव संवादः सर्व्वशाखास्वश्रोष्यद्विरुद्धानेकप्रकारेण नाश्रोष्यत्।

------

योजयति। मृदित्यादिना॥ यः शब्दगत्या प्रतीयते न स श्रुत्यर्थो भवति किन्तु तात्पर्य्यगम्यस्यैव श्रुत्यर्थतेत्यत्र दृष्टान्तमाह। यथेति॥ वागादीनां प्राणानामहं श्रेयानिति मिथः सङ्घर्षः संवादस्तत्र याऽऽख्यायिका श्रूयते नासौ श्रुत्यर्थो भवति। वागादीनामचेतनत्वात्। तथा सृष्ट्यादिश्रुतिरपि न स्वार्थे तात्पर्य्यवतीत्यर्थः॥ उदाहरणान्तरं सूचयति। वागादीति॥ देवासुरसंग्रामे देवास्तावदसुरानभिभविष्णुमुपचक्रमिरे। वागादीं स्तोद्गातृत्वेन वव्रिरे। तांश्च वागादीन् कल्याणासङ्गजेन पाप्मना असुरा विविधुरित्याद्याख्यायिका च न यथाश्रुतार्था। वागादीनां वागभावेनोद्गानासामर्थ्यात्। किन्त्वसुरधर्षितत्वात्प्राणोत्क्रान्तौ देहपातप्रसिद्धेश्च प्राणः श्रेष्ठो भवतीति प्राणवैशिष्ट्यनिश्चये बुद्ध्यवतारशेषत्वेन सा कल्पिता। तथैव प्रकृतेऽपि सृष्ट्यादिश्रुतेः स्वार्थे तात्पर्य्याभावात्तत्कार्य्यस्य तद्व्यतिरेकेणाभावात्तदेवास्तीत्यद्वैतबुद्ध्यवतारोपायत्वेन सृष्ट्यादिप्रक्रिया कल्पितेत्यर्थः। देवताशब्दप्रयोगाच्चेतनत्वं वागादीनामिति मुख्यार्थत्वं संवादादिश्रवणस्य। अतोऽसिद्धमुदाहरणमिति

उपासनोपदिष्टेयं तदर्थमनुकम्पया ॥१६॥

---

ध्यमोत्कृष्टदृष्टयः । हीना निकृष्टा मध्यमा उत्कृष्टा च दृष्टिर्दर्शनसामर्थ्यञ्च येषां ते मन्दमध्यमोत्तमबुद्धिसामर्थ्योपेता इत्यर्थः । उपासनोपदिष्टेयं तदर्थं मन्दमध्यमदृष्ट्याश्रमाद्यर्थं कर्माणि च । न चात्मैक एवाद्वितीय इति निश्चितोत्तमदृष्ट्यर्थं दयालुना वेदेनानुकम्पया सन्मार्गगाः

---

मन्दानां मध्यमानाञ्च उत्तमदृष्टिप्रवेशार्थं दयालुना वेदेनोपासनोपदिष्टा । तथा चोपासनानुष्ठानद्वारेणोत्तमामेकत्वदृष्टिं क्रमेण प्राप्ता उत्तमेष्वेषान्तर्भविष्यन्तीत्यर्थः ॥ श्लोकव्यावर्त्त्यामाशङ्कामाह । यदीति ॥ तस्यैव परमार्थतः सत्त्वे प्रमाणमाह । एकमेवेति ॥ द्वैतप्रतीतेर्मिथ्याद्वैतविषयत्वेनाविरोधमाह । असदिति ॥ अद्वैतस्यैव वस्तुत्वे ध्यानविधिविरोधमाह । किमर्थेति ॥ उपासनोपदेशमेव विशदयति । आत्मेति ॥ तत्र हि निदिध्यासितव्य इत्युपासनोपदिश्यते । य आत्मेत्यादौ तु स विजिज्ञासितव्य इति ध्यानविधिः । स क्रतुमित्यत्र तच्छब्देन शमादिमानधिकारी परामृश्यते । अद्वैतस्यैव वस्तुत्वे कर्मविधिविरोधोऽपि प्रसरतीत्याह । कर्माणि चेति किमर्थान्युपदिष्टानीति सम्बन्धः । अद्वैताधिकारिणोऽधिकार्य्यन्तरं प्रति विधिद्वयं सावकाशमिति परिहरति । उच्यत इति ॥ तत्र त्वुपासनोपदेशः कर्मोपदेशश्च उच्यते ॥ तदेव कारणमक्षरयोजनया प्रकटयति । आश्रमा इति ॥ आश्रमशब्देनाश्रमिणो उच्यन्तां वर्णिनस्तु कथं उच्येरन्नित्याशङ्क्याह । आश्रमेति ॥ शूद्रान् व्यावर्त्य त्रैवर्णिकानामेव ग्रहणार्थं मार्गगा इति विशेषणम् ॥ त्रैविध्यमेवाकाङ्क्षाद्वारा स्फोरयति । कथमित्यादिना । कार्य्यमात्रविषयत्वान्निकृष्टत्वम् । मध्यमत्वं कारणमात्रविषयत्वात् ।

स्वसिद्धान्तव्यवस्थासु द्वैतिनो निश्चिता दृढम् ।

सन्तः कथमिमामुत्तमामेकत्वदृष्टिं प्राप्नुयुरिति । यन्म-नसा न मनुते येनाहुर्मनो मतं तदेव ब्रह्म त्वं विद्धि । नेदं यदिदमुपासते तत्त्वमसि आत्मैवेदं सर्वमित्यादि-श्रुतिभ्यः ॥१६॥

शास्त्रोपपत्तिभ्यामवधारितत्वात् अद्वयात्मदर्शनं सम्य-ग्दर्शनं तद्बाह्यत्वान्मिथ्यादर्शनमन्यत् । इतश्च मिथ्यादर्शनं द्वैतिनां रागद्वेषादिदोषास्पदत्वात् कथं सिद्धान्तव्यव-स्थासु स्वसिद्धान्तरचनानि यमेषु कपिलकणादबुद्धादि-

---

उत्कृष्टत्वमद्वैतविषयत्वादिति द्रष्टव्यम् ॥ एवं पूर्वार्द्धं व्याख्यायोत्त-रार्द्धं व्याकरोति । उपासनेति ॥ कर्मोपदेशस्यापि तदर्थत्वमाह । कर्म्माणि चेति ॥ व्यावर्त्त्यां शङ्कां दर्शयति । न चेति ।। वेदेनोपासना-द्युपदेशे मन्दानां मध्यमानाञ्च कथमनुग्रहः सिध्यतीत्याशङ्क्याह । सन्मार्गगा इति ॥ प्राप्नुयुरित्युपासनोपदिष्टा । कर्म्माणि चेति पूर्व्वेण सम्बन्धः । उपास्यं ब्रह्मैव न भवतीति प्रतिषेधात् मन्दमध्यमदृष्टिवि-षत्वमुपासनस्य प्रतिभातीत्याह । यन्मनसेति ॥ अद्वैतदृष्टीनान्तु वर्णा-श्रमभेदाभिमानाभावादेव नोपासनं कर्म्म वा सम्भवतीत्याह । तत्त्वम-सीति ॥१६॥

अद्वैतदर्शनस्योपासनादिविधिविरोधाभावेऽपि मतान्तरैर्विरोधोऽस्तीत्या-शङ्क्य तेषां भ्रान्तिमूलत्वान्नैवमित्याह । स्वसिद्धान्तेति॥ श्लोकस्य तात्पर्यं वक्तुं भूमिकां करोति । शास्त्रेति ॥ तद्बाह्यत्वादित्यत्र तच्छब्देन शास्त्रो-पपत्ती स्पृश्येते ॥ द्वैतदर्शनस्य मिथ्यादर्शनत्वे हेत्वन्तरपरत्वमवतारितस्य श्लोकस्य दर्शयति । इतश्चेति ॥ इतः शब्दार्थमेव दर्शयति । द्वैतिनामिति॥

परस्परं विरुध्यन्ते तैरयं न विरुध्यते ॥१७॥

---

दृष्ट्यनुसारिणो द्वैतिनो निश्चिताः । एवमेवैष परमार्थो नान्यथेति तत्र तत्राऽनुरक्ताः प्रतिपक्षञ्चात्मनः पश्यन्तस्तं द्विषन्त इत्येवं रागद्वेषोपेताः स्वसिद्धान्तदर्शननिमित्तमेव परस्परमन्योन्यं विरुध्यन्ते । तैरन्योन्यविरोधिभिरस्मदीयोऽयं वैदिकः सर्व्वानन्यत्वात्मैकत्वदर्शनपक्षो न विरुध्यते । यथा स्वहस्तपादादिभिः । एवं रागद्वेषानास्पदत्वादात्मैकत्वबुद्धिरेव सम्यग्दर्शनमित्यभिप्रायः ॥१७॥

---

आदिशब्देन मदमानादयो गृहीताः । स्वीयं स्वीयं सिद्धान्तं व्यवस्थापयितुं तत्त्वज्ञानमधिकृत्य प्रवृत्तानां वादिनां कुतो दोषास्पदत्वमित्याक्षिपति । कथमिति ॥ श्लोकाक्षरयोजनया परिहरति । स्वसिद्धान्तेत्यादिना ॥ निश्चयमेव स्फोरयति । एवमेवेति ॥ रागास्पदत्वेऽपि तेषां द्वेषास्पदत्वं कथमित्याशङ्क्याह । प्रतिपक्षमिति ॥ उत्तरार्द्धं विभजते । स्वसिद्धान्तेति ॥ यद्धि वादिनां प्रत्येकं स्वसिद्धान्तेनोपसंगृहीतं दर्शनं तन्निर्द्धारणार्थमन्योन्यं वादिनो विरोधमाचरन्तो दृश्यन्ते । न च तैरद्वैतदर्शनं विरुध्यमानमध्यवसीयते । यथा स्वकीयकरचरणादिभिराघाते कदाचिदाचरितेऽपि द्वेषो न जायते । परत्व बुद्ध्यभावात्तथा द्वैताभिमानिभिरुपद्रवे क्षुद्रे कृतेऽपि नाद्वैतदर्शिनस्तेषु द्वेषो जायते । सर्व्वानन्यत्वात्परत्वबुद्ध्यभावादित्यर्थः । अद्वैतदर्शनस्य सम्यग्दर्शनत्वं प्रतिज्ञातम् । कथं प्रदर्शितया प्रक्रियया प्रतिपन्नमित्याशङ्क्याह । एवमिति ॥१७॥

अद्वैतं परमार्थो हि द्वैतं तद्भेद उच्यते ।

---

केन हेतुना तैर्न विरुध्यत इत्युच्यते । अद्वैतं परमार्थो हि यस्माद्द्वैतं नानात्वमसस्याद्वैतस्य भेदस्तस्य कार्य्यमित्यर्थः । एकमेवाद्वितीयम् । तत्तेजोऽसृजतेति श्रुतेः । उपपत्तेश्च । स्वचित्तस्पन्दनाभावे समाधौ मूर्च्छायां सुषुप्तौ चाभावात् । अतस्तद्भेद उच्यते द्वैतम् । द्वैतिनान्तु तेषां परमार्थतश्चोभयथापि द्वैतमेव । यदि च तेषां भ्रान्तानां द्वैतदृष्टिरस्माकमद्वैतदृष्टिरभ्रान्तानां तेनायं हेतुनास्मत्पक्षो न विरुध्यते तैः । इन्द्रो मायाभिः । न तु तद्द्वि-

---

द्वैतपक्षैरद्वैतपक्षस्य विषयद्वारके विरोधेऽधिगम्यमाने कथमविरोधवाचो युक्तिरित्याशङ्क्य स्वमतपर्य्यालोचनया तावदविरोधमाह । अद्वैतमिति ॥ मिथ्याभूतेन द्वैतेनाद्वैतस्याविरोधेऽपि परमार्थभूतेन तेन विरोधः स्यादित्याशङ्क्य तथाविधं द्वैतमेव नास्तीति मत्वाह । तेषामिति ॥ द्वैतिनां परमार्थत्वेनापरमार्थत्वेन च द्वैतमेव व्यवहारगोचरीभूतम् तच्च सम्प्रतिपन्नद्वैतवन्मिथ्यात्वेवं स्थिते न द्वैतेनाद्वैतस्य विरोधः शक्यशङ्को भवतीत्यर्थः॥ श्लोकप्रतिषेध्यं प्रश्नं करोति । केनेति॥ श्लोकाक्षराणामर्थमाचक्षाणो हेतुमाह । उच्यत इति ॥ द्वैतस्याद्वैतकार्य्यत्वे प्रमाणमाह । एकमेवेति ॥ श्रुतिप्रामाण्याद्द्वैतस्याद्वैतकार्य्यत्वावगमात्कार्य्यस्य च कारणात् भेदेन सत्त्वनिषेधात्तत्सत्यमित्यवधारणाच्चाद्वैतदर्शनं द्वैतदर्शनेन विरुद्धमित्यर्थः । अद्वैतदर्शनं द्वैतदर्शनैरविरुद्धमित्यत्रैव युक्तिमाह । उपपत्तेश्चेति ॥ तामेवोपपत्तिं सङ्क्षिप्य दर्शयति । स्वचित्तेति ॥ सुषुप्त्याद्यवस्थायां स्वकीयचित्तस्पन्दनाभावे

**तेषामुभयथा द्वैतं तेनायं न विरुध्यते॥१८॥**
**मायया भिद्यते ह्येतन्नान्यथाजं कथञ्चन ।**

तीयमस्तीतिश्रुतेः । यथा मत्तगजारूढ उन्मत्तं भूमिष्ठं प्रति गजारूढोऽहं वाहय मां प्रतीति ब्रुवाणमपि तं प्रति न वाहयत्यविरोधबुद्ध्या तद्वत् । ततः परमार्थतो ब्रह्म चिदात्मैव द्वैतिनाम् । तेनायं हेतुनात्मैकत्वपक्षो न विरुध्यते तैः ॥१८॥

द्वैतमद्वैतभेद इत्युक्ते द्वैतमप्यद्वैतवत्परमार्थसदिति स्यात् कस्यचिदाशङ्केत्यत आह । यत्परमार्थसदद्वैतं

---

मिथ्याज्ञानोपरमे सति द्वैतदर्शनाभावादद्वैतं सिद्धम् । ततश्च स्वप्नवज्जाग्रद्दृष्टानामुत्पत्तिदर्शनादित्युपपत्ते द्वैतमद्वैतकार्य्यं न च कारणं तत्कार्य्यप्रतिभासैर्विरुध्यते । कार्य्यस्य वाचारम्भणमात्रत्वात् कारणातिरेकेनाभावादित्यर्थः ॥ तेषामित्यादिभागं विभजते । द्वैतिनान्त्विति॥ परमार्थद्वैतांशेनाद्वैतविरोधमाशङ्क्य द्विधा व्यवहारेऽपि विमतस्य द्वैतस्य द्वैतत्वादेव सम्प्रतिपन्नवन्न मिथ्यात्वसिद्धेर्न तेन विरोधोऽद्वैतस्येति मन्वानः सन्नाह । यदि चेति ॥ भ्रान्तिमूलद्वैतदर्शनैरद्वैतदर्शनं प्रमाणमूलमविरुद्धमित्येतद्दृष्टान्तेनोपपादयति । यथेत्यादिना ॥ कार्य्यकारणभूतयोर्द्वैताद्वैतयोरविरोधे सिद्धे फलितमाह । तत इति॥ अद्वैतिनां द्वैतिनाञ्च प्रातिस्विकपक्षपर्य्यालोचनातो द्वैतपक्षैरद्वैतपक्षो विरुद्धो न भवतीति फलितमुपसंहरति । तेनेति ॥१८॥

अद्वैतमेव द्वैतात्मना परिणमते चेद्द्वैतमपि तात्त्विकं स्यादित्याशङ्क्याह । माययेति ॥ विवर्त्तवादानङ्गीकारे दोषमाह । तत्त्वत इति ॥ पूर्व्वार्द्धव्यावर्त्त्यामाशङ्कामादर्शयति । द्वैतमिति ॥ तत्र पूर्व्वार्द्धाक्षराण्यवतार्य्य व्याकरोति । अत आहेति ॥ विमतो भेदो मिथ्याभेद-

तत्त्वतो भिद्यमाने हि मर्त्यतामम्मृतंव्रजेत्॥१९॥
अजातस्यैव भावस्य जातिमिच्छन्ति वादिनः॥

मायया भिद्यते ह्येतत्तैमिरिकानेनचन्द्रवद्रज्जुः सर्पादि-
धारादिभिर्भेदैरिव न परमार्थतो निरवयवत्वादात्मनः।
सावयवं ह्यवयवान्यथात्वेन भिद्यते। यथा मृद्घटादिभेदैः।
तस्मान्निरवयवमजं नान्यथा कथञ्चन केनचिदपि प्रका-
रेण न भिद्यत इत्यभिप्रायः। तत्त्वतो भिद्यमाने ह्यमृतम-
जमद्वयं स्वभावतः सन्मर्त्त्यतां व्रजेत्। यथाऽग्निः शीत-
ताम्। तच्चानिष्टं स्वभाववैपरीत्यगमनम्। सर्व्वप्रमाणवि-
रोधात्। अजमद्वयमात्मतत्त्वं माययैव भिद्यते न परमा-
र्थतः तस्मान्न परमार्थसद्द्वैतम्॥१९॥

ये तु पुनः केचिदुपनिषद्व्याख्यातारो ब्रह्मवादिनो
वावदूका अजातस्यैवात्मतत्त्वस्यामृतस्य स्वभावतो जाति-

---

त्वाच्चन्द्रादिभेदवदित्यर्थः॥ निगतं तत्त्वतो भेदरहितम्॥ निरवयवत्वा-
न्नित्यत्वादजत्वाच्च व्यतिरेकेण घटादिवदित्याह। नेत्यादिना॥ निरवय-
वत्वेऽपि वस्तुनः स्फुटनधर्म्मत्वमाशङ्क्याह। सावयवं हीति॥ उक्त-
मनुमानं निगमयति। तस्मादिति॥ अन्यथा परमार्थत्वेनेत्यर्थः। पुन-
र्जनुकर्पणमन्वयार्थं कार्य्यत्वधर्मत्वांशत्वादिरत्र प्रकारोऽभिप्रेतः॥
विपक्षे दोषं वदन् द्वितीयार्द्धं विवृणोति। तत्त्वत इति॥ प्रसङ्गस्येष्ट-
त्वमाशङ्क्य निराचष्टे। तच्चेति॥ विवर्त्तवादमुपसंहरति। अजमिति॥
स्थिते विवर्त्तवादे फलितमाह। तस्मादिति॥१९॥

स्वपक्षमुक्त्वा स्वयूथ्यपक्षमनुभाष्य दूषयति। अजातस्येति॥ अनु-
वादविभागं विभजते। ये त्विति॥ स्वभावत एवाजातस्य स्वभावत

२१

अजातो ह्यमृतो भावो मर्त्यतां कथमेष्यति ॥२०॥
न भवत्यमृतं मर्त्यं न मर्त्यममृतं तथा ॥
प्रकृतेरन्यथाभावो न कथंचिद्भविष्यति ॥२१॥
स्वभावेनामृतो यस्य भावो गच्छति मर्त्यतां ।

---

व्युत्पत्तिमिच्छन्ति परमार्थत एव । तेषां जातं चेत्तदेव मर्त्यतामेष्यत्यवश्यम् । स चाजातो ह्यमृतभावः स्वभावतः सन्नात्मा कथं मर्त्यतामेष्यति न कथंचन मर्त्यत्वं स्वभाववैपरीत्यमेष्यतीत्यर्थः ॥२०॥

यस्मान्न भवत्यमृतं मर्त्यं लोकेनापि मर्त्यममृतं तथा ततः प्रकृतेः स्वभावस्यान्यथाभावः स्वतः प्रच्युतिर्न कथंचिद्भविष्यति । अग्नेरिवौष्ण्यस्य ॥२१॥

यस्य पुनर्वादिनः स्वभावेनामृतो भावो मर्त्यतां गच्छति परमार्थतो जायते तस्य प्रागुत्पत्तेः स भावः

---

एवाद्वयस्य चात्मतत्त्वस्य परमार्थत एव जातिमुत्पत्तिं ये स्वयूथ्याः कांक्षन्तीत्यर्थः ॥ जातस्य हि ध्रुवो मृत्युरिति न्यायेन दूषयति । तेषामिति ॥ अजातो हीत्याद्युत्तरार्धमुक्तेऽर्थे योजयति । स चेति ॥२०॥

पदार्थानां स्वभाववैपरीत्यगमनमनुपपन्नमित्युक्तं प्रपञ्चयति । न भवतीति ॥ तत्र पूर्वार्धं हेतुत्वेन व्याचष्टे । यस्मादिति ॥ उत्तरार्धं हेतुमत्त्वेन योजयति । तत इति ॥ यथाग्नेः स्वभावभूतस्योष्ण्यस्यान्यथात्वं शैत्यगमनमयुक्तं तथाऽन्यत्रापि स्वभावस्यान्यथात्वमनुचितं स्वरूपनाशप्रसङ्गादित्यर्थः ॥२१॥

ननु अक्षरकारणरूपेण प्रागुत्पत्तेरमृतमपि कार्याकारेणोत्पत्त्युत्तरकालं मर्त्यतां गमिष्यति । ततो रूपभेदादुभयमविरुद्धमिति तत्राह ।

कृतकेनामृतस्तस्य कथं स्थास्यति निश्चलः॥२२॥
भूततोऽभूततो वापि सृज्यमाने समा श्रुतिः।

---

स्वभावतोऽमृत इति प्रतिज्ञा मृषैव। कथं तर्हि कृतकेना-मृतस्तस्य स्वभावः कृतकेनामृतः स कथं स्थास्यति निश्च-लोऽमृतस्वभावतया न कथञ्चित्स्थास्यति आत्मा जातिवा-दिनः सर्वदाऽजं नाम नास्त्येव सर्वमेतन्मर्त्यं। अतोऽ-निर्मोक्षप्रसङ्ग इत्यभिप्रायः॥२२॥

नन्वजातिवादिनः सृष्टिप्रतिपादिका श्रुतिर्न सङ्ग-च्छते प्रामाण्यं। बाढं विद्यते सृष्टिप्रतिपादिका श्रुतिः। सा त्वन्यपरा। उपायः सोऽवतारायेत्यवोचाम। इदा-नीमुक्तेऽपि परिहारे पुनश्चोद्यपरिहारौ विवक्षितार्थं प्रति

---

स्वभावेनेति॥ पूर्वार्द्धं साध्याहारं योजयति। यस्येति॥ प्रागवस्था-यामपि कारणस्यैव कार्य्याकारेण जन्मयोग्यतया मर्त्यतागमान्मृषैव प्रतिज्ञा स्यादित्यर्थः। कथं तर्हि तस्य प्रतिज्ञा युक्तेत्याशङ्क्य कृतकेन मर्त्यविलयेनामृतस्तस्य वादिनः स कारणाख्यो भावो भवतीति प्रतिज्ञा युक्तेत्याह। कथमित्यादिना॥ भवतु प्रलयावस्थायामन्तःस्थापरिणा-मेणामृतत्वं ततो वा किं स्यादित्याशङ्क्याह। कृतकेनेति॥ कृतकत्वस्य यत्कृतकं तदनित्यमिति विनाशित्वेन व्याप्तत्वादित्यर्थः। किञ्चास्यामृ-वस्थायां कार्य्यमात्रं विलिप्य ब्रह्मास्मीति ज्ञानाभावान्मोक्षो न स्यादित्याह। आत्मेति॥२२॥

परिणामवादस्य सृष्टिश्रुत्यनुसारेण स्वीकार्य्यत्वमाशङ्क्य निरस्यति। भूतत इति॥ परिणामवादे विवर्त्तवादे च सृष्टिश्रुतेरविशेषादद्वैतानु-

निश्चितं युक्तियुक्तञ्च यत्तद्भवति नेतरत् ॥२३॥

सृष्टिश्रुत्यक्षराणामानुलोम्यविरोधाशङ्कामात्रपरिहारार्थौ। भूततः परमार्थतः सृज्यमाने वस्तुनि अभूततो मायया वा मायां विनेव सृज्यमाने वस्तुनि समा तुल्या सृष्टि श्रुतिः । ननु गौणमुख्ययोर्मुख्ये शब्दार्थप्रतिपत्तिर्युक्ता ।न। अन्यथा सृष्टेरप्रसिद्धत्वान्निष्प्रयोजनत्वाच्चेत्यवोचाम । अविद्यासृष्टिविषयैव सर्व्वा गौणी मुख्या च सृष्टिः न परमार्थतः । सबाह्याभ्यन्तरो ह्यज इति श्रुतेः । तस्माच्छ्रुत्या निश्चितं यदेकमेवाद्वितीयमजममृतमिति युक्तियुक्तञ्च । युक्त्या च सम्पन्नं तदेवेत्यवोचाम पूर्व्वैर्ग्रन्थैः । तदेव श्रुत्यर्थो भवति नेतरत्कदाचिदपि ।।२३।।

---

रोधिश्रुतियुक्तिवशाद्विवर्त्तवादस्यैव स्वीकर्त्तव्यतेति भावः । सृष्टिश्रुतेरद्वैतानुगुण्ये प्रमाणयुक्त्यनुगृहीतमद्वैतमेवाभ्युपगन्तव्यमिति फलितमाह । निश्चितमिति ॥ श्लोकव्यावर्त्त्यां शङ्कां दर्शयति । नन्विति ।। वस्तुतो कार्य्याकारेण न जायते तर्हि सृष्टिश्रुतिरक्लिष्टा स्यादित्यर्थः । सृष्ट्यनुवादिनी श्रुतिरस्तीत्यङ्गीकरोति । वाढमिति ॥ तस्या मिथ्यासृष्ट्यनुवादित्वेन कथमुपपत्तिरित्याशङ्क्याह । सा त्विति ॥ कथमद्वैतपरत्वेन सृष्टिश्रुतेरुपपत्तिरित्याशङ्क्याह । उपाय इति ॥ यदि सृष्टिश्रुतेरद्वैतपरत्वेन तद्विरोधसमाधी अधस्तादेवोक्तौ तर्हि पुनश्चोद्यं तत्परिहारश्च यक्तौ पुनरुक्तेरित्याशङ्क्याह । इदानीमिति ॥ मिथ्यासृष्टिवादे श्रुतिपदानामजजतादभवदित्यादीनामसामञ्जस्य विरोधाशङ्कायां तावन्मात्रं परिहर्त्तुं पुनश्चोद्यपरिहाराविस्यर्थः ॥ श्लोकस्य तात्पर्यमुक्त्वा पूर्व्वार्द्धाक्षराणि व्याकरोति।

नेह नानेति चाम्नायादिन्द्रो मायाभिरित्यपि।

कथं श्रुतिनिश्चय इत्याह। यदि हि भूत एव सृष्टिः स्यात्ततः सत्यमेव नाना वस्त्विति तदभावप्रदर्शनार्थमा-म्नायो न स्यात्। अस्ति च नेह नानास्ति किञ्चनेत्यादि-राम्नायो द्वैतभावप्रतिषेधार्थः। तस्मादात्मैकत्वप्रतिपत्त्यर्था कल्पिता सृष्टिरभूतैव प्राणसंवादवत्। इन्द्रो मायाभि-

भूतत इति॥ माया ह्येषा मया सृष्टेत्यादिवत् तत्तेजोऽसृजतेति श्रुतिः सत्त्वं त्यच्चाभवदिति श्रुतिस्तु देवदत्तो व्याघ्रोऽभवदिति। तन्न। न च सत्यत्वं विशेषणमात्रोपलभ्यते। तेन मायामय्यां सृष्टाविष्टायामपि सृष्टिश्रुतिः श्लिष्टेत्यर्थः। गौणमुख्ययोर्मुख्ये कार्य्ये सम्प्रत्यय इति न्यायमाश्रित्य शङ्कते। नन्विति। अग्निर्माणवक इत्यत्र माणवकेऽग्नि-शब्दप्रयोगोऽप्यग्निमानयेत्यादिप्रयोगे प्रथमं वह्निप्रतीतेर्मुख्यमेव प्रथमं प्रतिभातीति मुख्ये पदव्युत्पत्तेर्मुख्यार्थतया सत्या सृष्टिरेष्टव्येत्यर्थः॥ मुख्यसृष्ट्यङ्गीकारेऽपि सत्या सृष्टिर्न सिद्ध्यति॥ असत्यत्वे सत्यायाः सृष्टेः सृष्टिशब्दार्थत्वेनाप्रसिद्धत्वादिति परिहरति। नेत्यादिना॥ लौकिकानां मुख्यसृष्टेः सत्यसृष्टित्वेऽपि फलाभावान्न तत्र श्रुतितात्पर्य्य-मित्याह। निष्प्रयोजनत्वाच्चेति॥ अन्यथा सृष्टेरप्रसिद्धत्वमेव स्पष्टयति। अविद्येति॥ गौणी स्वप्ने रथादिसृष्टिः। मुख्या जागरे घटादिसृष्टिः सर्व्वाप्यविद्यावस्थायामेव तस्यां सत्यामेव भावान्न तत्त्वदृष्ट्या कापि सृष्टिः सम्भवति। तथा भूतस्यान्यथाभूतस्य स्वतः परतो वा वस्तुनो-ऽन्यथाभावसम्भवात्तदतिरेकेण च सृष्टेरयोगादित्यर्थः। वस्तुस्वरूपा-लोचनया वास्तव्याः सृष्टेरश्लिष्टत्वे श्रुतिमनुकूलयति। सवाह्येति॥ सृष्टेरविद्याविद्यमानत्वेऽपि किं वस्तु विवक्षितमित्याशङ्क्योत्तरार्द्धं विभजते। तस्मादिति॥ निरवयवत्वं विभुत्वमित्यादिर्युक्तिः। तेनाद्वै-तमेव श्रुतितात्पर्य्यगम्यं न द्वैतमिति फलितमाह। तदेवेति॥२३॥

**अजायमानो बहुधा मायया जायते तु सः ॥२४॥**

---

रित्यभूतार्थप्रतिपादकेन मायाशब्देन व्यपदेशात् । ननु प्रज्ञावचनो मायाशब्दः । सत्यं । इन्द्रियप्रज्ञाया अविद्यात्वेन मायात्वाभ्युपगमाददोषः । मायाभिरिन्द्रियप्रज्ञाभिरविद्यारूपाभिरित्यर्थः । अजायमानो बहुधा विजायत इति श्रुतेः । तस्मान्माययैव जायते तु सः । तुशब्दोऽवधारणार्थः । माययैवेति । न ह्यजायमानत्वं बहुधा जन्म चैकत्र सम्भवति । अग्नाविव शैत्यमौष्ण्यञ्च । फलवत्त्वा-

---

सृष्टेर्न्यायत्वस्फुटीकरणद्वारेणाद्वैतमेव मुख्यार्थतया निर्द्धारयितुं श्रौतनिश्चयमेव विवृणोति । नेहेति ॥ आकाङ्क्षां प्रदर्श्य श्लोकाक्षराणि व्याकरोति । कथमित्यादिना ॥ तत्राद्यपादे व्यतिरेकं दर्शयित्वा पुनरन्वयाख्यानेन व्याचष्टे । यदि हीति ॥ द्वैतभावश्चेत् प्रतिषिध्यते कथं तर्हि सृष्टिरुपदिश्यते तत्राह । तस्मादिति ॥ यथा प्राणवैशिष्ट्यदृष्ट्यर्थं प्राणसंवादः श्रुतिषु कल्प्यते तथा सृष्टिरेकत्वप्रतिपत्त्यर्थत्वेन कल्पिता । यास्त्वयाः सृष्टेरयोगस्योपदिष्टत्वादित्यर्थः । कल्पिता सृष्टिरित्यत्र हेत्वन्तरं दर्शयन् द्वितीयं पादमवतार्य तात्पर्यमाह । इन्द्र इति ॥ मायाशब्देन सृष्टेर्व्यपदेशादसौ कल्पिता युक्तेति शेषः । अभिधानग्रन्थे प्रज्ञानामसु पाठान्मायाशब्दो मिथ्यार्थो न भवतीति शङ्कते । सन्निति ॥ मायाशब्दस्य प्रज्ञानामसु काचित्कं पाठमङ्गीकरोति । सत्यमिति ॥ कथं तर्हि मिथ्यार्थत्वं तत्राह । इन्द्रियेति ॥ न हि मायाशब्दिता प्रज्ञा ब्रह्मचैतन्यं। भूयश्चान्ते विश्वमायानिवृत्तिरित्यादौ निवृत्तिश्रवणात् । किन्त्वनादि- न्द्रियजन्या वस्यश्चाविद्यान्वयव्यतिरेकानुविधायितया विद्यात्वेन

सम्भूतेरपवादाच्च सम्भवः प्रतिषिध्यते ।

---

आत्मैकत्वदर्शनमेव श्रुतिनिश्चितोऽर्थः । तत्र को मोहः कः शोकः एकत्वमनुपश्यत इत्यादिमन्त्रवर्णात् । मृत्योः स मृत्युमाप्नोतीति निन्दितत्वाच्च सृष्ट्यादिभेददृष्टेः ॥२४॥

अन्धन्तमः प्रविशन्ति ये सम्भूतिमुपासत इति श्रुतेः सम्भूतेरुपास्यत्वापवादात्सम्भवः प्रतिषिध्यते । न हि परमार्थतः सम्भूतायां सम्भूतौ तदपवाद उपपद्यते । ननु विनाशेन सम्भूतेः समुच्चयविध्यर्थः सम्भूत्यपवादः । यथाऽन्धन्तमः प्रविशन्ति येऽविद्यामुपासते इति । सत्यमेव

---

मिथ्यात्वान्मायाशब्दस्य मिथ्यार्थत्वेनानुपपत्तिरित्यर्थः । तात्पर्यार्थमुक्त्वा तदैवाक्षरानुगुण्यमाह । मायाभिरिति ॥ पुरुरूपः सन्नीयत इति सम्बन्धः । मायामयी सृष्टिरित्यत्र हेत्वन्तरपरत्वेन तृतीयपादमवतारयति । अजायमान इति ॥ अजायमानस्य बहुधा विजायमानत्वं विरुद्धमित्याशङ्क्य चतुर्थपादमुत्थापयति । तस्मादिति ॥ श्रुतस्य कथमेवकारस्यावापः स्यादित्याशङ्क्याह । तुशब्द इति ॥ अवधारणरूपमर्थमेवाभिनयति । माययैवेति ॥ तस्मादित्यमवधार्यते । वास्तवे जन्मनि का वस्तुक्षतिरित्याशङ्क्याह । न ह्यजेति ॥ आत्मैकत्वज्ञानमेव सृष्टिश्रुतितात्पर्यगम्यं सृष्टिस्तु तच्छेषत्वादविवक्षितेत्यत्र हेत्वन्तरमाह । फलवत्त्वाच्चेति ॥ तस्य फलवत्त्वे प्रमाणमाह । तत्रेति ॥ एकत्वमाचार्योपदेशमनुपश्यतः साक्षात्कुर्वतस्तदेकत्वसाक्षात्कारे सति शोकमोहोपलक्षितः संसारो न भवतीत्यर्थः । न केवलं विफलत्वाद्भेददृष्टिरविवक्षिता किन्तु निन्द्यत्वेन निषिद्धत्वादनर्थकरणत्वाच्चेत्याह । मृत्योरिति ॥२४ ।

कोऽन्वेनं जनयेदिति कारणं प्रतिषिध्यते ॥२५॥

---

देवतादर्शनस्य सम्भूतिविषयस्य विनाशशब्दवाच्यस्य कर्म्मणः समुच्चयविधानार्थः सम्भूत्यपवादः । तथापि विनाशाख्यस्य कर्म्मणः स्वाभाविकाज्ञानप्रवृत्तिरूपस्य मृत्योरतितरणार्थत्ववद्देवतादर्शनकर्म्मसमुच्चयस्य पुरुषसंस्कारार्थस्य कर्म्मफलरागप्रवृत्तिरूपस्य साध्यसाधनैषणाद्वयलक्षणस्य मृत्योरतितरणार्थत्वं । एवं ह्येषणाद्वयलक्षणादविद्याया मृत्योरतितीर्णस्य विरक्तस्योपनिषच्छास्त्रार्थालोचनपरस्य नान्तरीयकी परमात्मैकत्वविद्योत्पत्तिरिति पूर्व्वभाविनीमविद्यामपेक्ष्य पश्चाद्भाविनी ब्रह्मविद्याऽमृतत्वसाधना

---

भेददृष्टेर्मिथ्यात्वे हेत्वन्तरमाह । सम्भूतेरिति ॥ सम्यग्भूतिरैश्वर्य्यं यस्याः सा सम्भूतिर्देवता हिरण्यगर्भाख्या । तस्याश्च कार्य्यमध्ये श्रेष्ठाया निन्दितत्वात् प्रधानमल्लनिबर्हणन्यायेन सम्भवशङ्कितं कार्य्यमेव निषिध्यते । तथा च सिद्धं तस्या अवस्तुत्वमित्यर्थः । कारणप्रतिषेधेन तदवस्तुत्वसिद्धेश्च यथोक्तार्थसिद्धिरित्याह । को न्वेनमिति ॥ पूर्व्वार्द्धं व्याकरोति । अन्धमिति ॥ सम्भूत्युपासनाया मन्त्रार्द्धेनाद्येन निन्दां विधाय ततो भूय इवेत्यादिनोत्तरार्द्धेन सम्भूतेरुक्ताया देवताया हेयत्वमुपपाद्यते । ततश्च प्रधानभूतदेवतोपास्यत्वापवादात्ततोऽर्व्वाक्तनं सर्व्वमेव सम्भवशङ्कितं कार्य्यमात्रं निषिध्यते । तथा च तदवस्तुत्वसिद्धिरित्यर्थः । सम्भूतेरपवादेऽपि तस्मिन्मिथ्यात्वनियमाभावान्न कार्य्यमात्रस्य मिथ्यात्वं शक्यं प्रतिज्ञातुमित्याशङ्क्याह । न हीति ॥ सम्भूतिनिन्दा तदवस्तुत्वख्यापनार्था न भवति । किन्तु विनाशेन न कर्म्मणा देवतोपासनस्य समुच्चयविधानस्य फलवत्त्वादिति शङ्कते । न हीति ॥

एकेन पुरुषेण सम्बध्यमाना अविद्यया समुच्चीयत इत्युच्यते। अतोऽन्यार्थत्वादमृतत्वसाधनं ब्रह्मविद्यामपेक्ष्य निन्दार्थ एव भवति सम्भूत्यपवादः। यद्यप्यशुद्धिवियोग हेतुरतन्निष्ठत्वात्। अत एव सम्भूतेरपवादात् सम्भूतेरपेक्षिकमेव सत्त्वमिति। परमार्थसदात्मैकत्वमपेक्ष्यामृताख्यः सम्भवः प्रतिषिध्यते। एवं मायानिर्मितस्यैव जीवस्याविद्यया प्रत्युपस्थापितस्याविद्यानाशे स्वभावरूपत्वात्परमार्थतः को न्वेनं जनयेत्। न हि रज्ज्वामविद्यारोपितं सर्पं पुनर्विवेकतो नष्टं जनयेत् कश्चित्। तथा न कश्चिदेनं जनयेदिति को

---

अपवादस्य समुच्चयविध्यर्थत्वे दृष्टान्तमाह। यथेति॥ अत खल्वविद्याशङ्कितकर्म्मापवादो विद्याकर्म्मणोः समुच्चयविध्यर्थः स्थितो विद्याञ्चाविद्याञ्च यस्तद्वेदोभयं सहेति श्रवणादित्यर्थः। उक्तञ्चोद्यमनुजानाति। सत्यमिति॥ तर्हि सम्भूत्यपवादस्तदवस्तुत्वख्यापको न भवतीत्युक्तं स्थितमेवेत्याशङ्क्य समुच्चयस्या विद्यावस्थायामवस्थितभवत्त्वाद्यदवस्तुत्वं सम्भूत्यादेर्निन्दाधीनमुक्तं तत्तदवस्थमेवेति मन्वानः सन्नाह। तथापीति॥ यथाग्निहोत्रादेः शास्त्रीयस्य कर्म्मणोऽशास्त्रीयप्रवृत्तिरूपमृत्युतरणार्थत्वं तथा साधनाद्येषणारूपमृत्युतरणार्थत्वं समुच्चयस्यापि वाच्यम्। तथा च सम्भूत्यादेरवस्तुत्वमविरुद्धमित्यर्थः। मृत्युतरणार्थत्वे संस्कारार्थत्वं कथमित्याशङ्क्याह। एवं हीति॥ कामचारकामवादकामभक्षणादिलक्षणस्वाभाविकप्रवृत्तिरूपाशुद्धिवियोगः संस्कारो यथा नित्याग्निहोत्रादि फलं तथा निष्कामेनानुष्ठितसमुच्चयफलं कामाख्याशुद्धिव्यावृत्तिरित्यर्थः॥ अविद्यया मृत्युं तीर्त्वेति मन्त्रे मृत्युतरणहेतुरविद्येति श्रवणात्। सम्भूत्यामृतमश्नुत इति च सम्भूतेरमृतत्वफलाभिलाषात्कथं समुच्चयफलं मृत्योरतितरणमित्याशङ्क्याह। अत इति॥ यतो न समु-

स एष नेति नेतीति व्याख्यातं निह्नुते यतः ।

---

न्त्वियाच्चेपार्थत्वात्कारणं प्रतिषिध्यते । अविद्योद्भूतस्य नष्टस्य जनयितृ कारणं न किञ्चिदस्तीत्यभिप्रायः । नाऽयं कुतश्चिन्न बभूव कश्चिदिति श्रुतेः ॥२५॥

सर्वविशेषप्रतिषेधेनायातोऽदेशो नेति नेतीति प्रति-

---

श्चयान्मृत्युमन्ततत्वं घटते तस्य । विद्ययाऽमृतमश्नुत इति वक्ष्यमाणत्वात् । अतः समुच्चयलक्षणा अविद्या विद्यया मृत्युं तीर्त्वेत्यत्र निर्दिश्यते । अतोऽचितमृत्युतरणहेतुत्वमसम्भवादित्यर्थः । यद्यपि विद्याशब्देन समुच्चयो विवक्ष्यते । कथं तर्हि विद्याञ्चाविद्याञ्चेत्यनेन विद्याविद्ययोः समुच्चयो निर्दिश्यते । न हि देवतादर्शनकर्मसमुच्चयस्य ब्रह्मविद्यायाः समुच्चयः सम्भवतीत्याशङ्क्याह । एवमिति ॥ नान्तरीयकत्वमवश्यम्भावित्वं प्रतिबन्धकाभावे कार्योत्पत्तेरित्यर्थः ॥ एवं मन्त्रार्थे स्थिते प्रकृते फलितमाह । अत इति ॥ अन्यार्थत्वं समुच्चयस्याशुद्धिक्षेपहेतुत्वं तच्चेदिष्टं किमित्यपवादस्तत्राह । यद्यपीति ॥ तथाप्यतन्निष्ठत्वात् परमार्थाभूतत्वफलत्वाभावात्तदपवादसिद्धिरित्यर्थः । अपवादफलं दर्शयन्नाद्यभागविभजनमुपसंहरति । अत एवेति ॥ को न्वेनं जनयेत् पुनरिति श्रुत्यर्थमाचक्षाणो द्वितीयार्द्धं विभजते । एवं मायेत्यादिना ॥ उक्तमर्थं दृष्टान्तेन स्पष्टयति । न हीति ॥ न कश्चिदेवं जनयेदिति कारणं प्रतिषिध्यत इति सम्बन्धः । प्रश्नार्थे किंशब्दे दृश्यमाने कथं कारणप्रतिषेधसिद्धिरित्याशङ्क्याह । को न्विति ॥ अक्षरार्थमुक्त्वा द्वितीयार्द्धस्य तात्पर्यमाह । अविद्येति ॥ ततश्चेदुद्भूतो जीवः कथं तस्य जनयितृ कारणं नेत्युच्यते व्याघातादित्याशङ्क्याह । नष्टस्येति ॥ जीवस्य जनयितृकारणाभावे प्रमाणमाह । नायमिति । तस्याविद्यामन्तरेण स्वतो जन्माभावं सूचयति । न बभूवेति ॥२५॥

इतोऽपि द्वैतं वस्तु न भवतीत्याह । स एष इति ॥ देयावेत्यादिना

सर्वं सग्राह्यभावेन हेतुनाऽजं प्रकाशते ॥२६॥

---

पादितस्यात्मनो दुर्बोध्यत्वं मन्यमाना श्रुतिः पुनः पुनरुपायान्तरत्वेन तस्यैव प्रतिपिपादयिषया यद्यद्व्याख्यातं तत्सर्वं निह्नुते । ग्राह्यं जनिमद्बुद्धिविषयमपलपत्यर्थात्स एष नेति नेतीत्यात्मनोऽदृश्यतां दर्शयन्ती श्रुतिरुपायस्योपेयनिष्ठतामजानत उपायत्वेन व्याख्यातस्योपेयवद्ग्राह्यतामाभूदित्यग्राह्यभावेन हेतुना कारणेन निह्नुत इत्यर्थः। ततश्चैवमुपायस्योपेयनिष्ठतामेव जानत उपेयस्य च नित्यैकरूपत्वमिति तस्य सबाह्याभ्यन्तरमजमात्मतत्त्वं प्रकाशते स्वयमेव ॥२६॥

---

व्याख्यातं मूर्त्तामूर्त्तादि सर्व्वमेव त्याज्यमग्राह्यं नेति नेतीति वीप्सया यतो निषेधति श्रुतिरतः स एष इत्युपक्रम्य प्रतिपादितस्यात्मतत्त्वस्य कूटस्थस्याविषयत्वेन प्रथमोपपत्तिरित्यर्थः । नेति नेतीति वीप्सातात्पर्य्यमाह । सर्व्वेति ॥ रूपद्वयोपन्यासानन्तरं तन्निषेधमन्तरेण निर्व्विशेषवस्तुप्रतिपत्तेरयोगात्तत्प्रतिपत्त्या च पुरुषार्थपरिसमाप्तिसम्भवादादेशो निर्विशेषस्यात्मतत्वोपदेशस्तावत् प्रस्तूयते । एवं प्रस्तुत्य नेति नेतीति वीप्सयासर्व्वस्य मूर्त्तामूर्त्तादिविशेषस्यारोपितस्य निषेधो दर्शितस्तेन चात्मा जिज्ञासितो विशिष्टो निर्दिष्ट इत्यर्थः । स चेदेवं मूर्त्तामूर्त्ताधिकारे प्रतिपादितस्तर्हि किमिति प्रदेशान्तरे पुनः पुनरेवं प्रतिपाद्यते पुनरुक्तेरित्याशङ्क्य व्याख्यातमित्यादि व्याचष्टे । प्रतिपादितस्येति ॥ यद्यपि मूर्त्तामूर्त्तप्रकरणे प्रतिपादितमात्मतत्त्वं तथापि तस्य परमसूक्ष्मत्वात् दुर्गमत्वं मन्यते श्रुतिः । सा पुनरुपायविशेषसद्भावाभिप्रायेण तस्यैव पुनः पुनः प्रतिपादनेच्छया यद्यदारोपितं तत्तदशेषमपह्नुत्यावशिष्टमात्मस्वरूपं निवेदयतीत्यर्थः ॥ सर्वमित्यादि स्पष्टीकु-

**सतो हि मायया जन्म युज्यते नतु तत्त्वतः ।**

एवं हि श्रुतिवाक्यशतैः सवाह्याभ्यन्तरमजमात्मतत्त्व-मद्वयं न ततोऽन्यदस्तीति निश्चितमेव । तद्युक्त्या चाधुनै-तदेव पुनर्निर्द्धार्य्यत इत्याह । तत्रैतत् स्यात्सदा ग्राह्य-मेव चेदसदेवात्मतत्त्वमिति । तन्न । कार्य्यग्रहणात् । यथा

---

वीणः स एष इति व्याचष्टे । ग्राह्यमिति ॥ स एष इत्याद्या श्रुतिर-दृश्यतामात्मनो विशेषं निषेधमुखेन दर्शयन्ती यत् दृश्यं कार्य्यं मनसां वाचाञ्च गोचरीभूतं तदशेषमर्थादपलपति । सा हि परमार्थतत्त्वदृश्य-मिति ब्रुवाणा दृश्यस्य वस्तुत्वेनोपपद्यते तथा चानुपपत्तेर्दृश्यवर्गस्या-वस्तुत्वं सिद्धमित्यर्थः ॥ ननु किमिति श्रुतिर्व्याख्यातं विशेषजातं निह्नुते पङ्कप्रक्षालनन्यायापातादित्याशङ्काग्राह्याभावेनेत्यादि व्याकरोति । उपायस्येति ॥ द्वे वा वेत्यादिना व्याख्यातस्य रूपप्रपञ्चस्याद्वितीय ब्रह्मात्ममात्रपर्य्यवसायितासम्प्रतिपाद्यमानस्य ब्रह्मवदेवोपायत्वेनाभि-मतस्यापि प्रपञ्चस्य वस्तुत्वेन ग्राह्यत्वाशङ्का या सा माभूदित्यशेषराहि-त्येनाद्वितीयब्रह्मस्वरूपनिर्द्धारणार्थमारोपितं प्रपञ्चं प्रतिषेधति श्रुति-रित्यर्थः । उपायस्य कल्पितत्वेन वस्तुत्वाभावादुपेयस्य च सदैकरूप-त्वात् कथं तथाविधवस्तुप्रतिपत्तिरित्याशङ्क्याजमित्यादि व्याचष्टे । तत-श्चेति ॥ समारोपितस्य सर्व्वस्य निषेधादेव स्वातन्त्र्येण वस्तुत्वा-भावनिश्चयादारोपितसर्पादेरधिष्ठानातिरेकेणासत्त्ववदुपायस्य भूत्त्वा-देरुपेयादद्वितीय ब्रह्ममात्रतामेव प्रतिपद्यमानस्य ब्रह्मणश्च सदैकरूप-त्वकूटस्थनित्यदृष्टिस्वभावत्वादि जानतस्तस्योत्तमस्याधिकारिणः स्वय-मेवान्यापेक्षामन्तरेणात्मतत्त्वमुक्तं विशेषणं प्रकाशि भवति । कल्पितस्य चोपायत्वं प्रतिबिम्बादिवदविरुद्धमित्यर्थः ॥१६॥

आत्मतत्त्वमजमद्वितीयं परमार्थभूतम् । द्वैतन्तु मायाकल्पित

तत्त्वतो जायते यस्य जातं तस्य हि जायते॥२७॥

---

सतो मायाविनो मायया जन्मकार्य्यं एवं जगतो जन्मकार्य्यं गृह्यमाणं मायाविनमिव परमार्थं सन्तमात्मानं जगज्जन्म मायास्पदमेव गमयति। यस्मात्सतो हि विद्यमानात्कारणात् मायानिर्म्मितस्य हस्त्यादिकार्य्यस्येव जगज्जन्म युज्यते नासतः कारणात्। न तु तत्त्वत एवात्मनो जन्म युज्यते। अथवा सतो विद्यमानस्य वस्तुनो रज्ज्वादेः सर्पादिवन्मायया जन्म युज्यते न तु तत्त्वतो यथा तथाऽग्राह्यस्यापि सत एवात्मनो रज्जुसर्पवज्जगद्रूपेण मायया जन्म युज्यते। न तु तत्त्वत एवाजस्यात्मनो जन्म। यस्य पुनः परमार्थसदजमात्मतत्त्वं जगद्रूपेण

---

मसदिति प्रतिपादितम्। तत्रैव हेत्वन्तरमाह। सतो हीति॥ यदात्मतत्त्वं सदा सदेकरूपं तस्या मायाया जगदाकारेण जन्मयुक्तम्। मायाया दुर्निरूपार्थसमर्थनपटीयस्त्वात्परमार्थतत्त्वं करूपमनेकरूपतया नोत्पत्तुं पारयति विरोधादित्यर्थः॥ विपक्षे दोषमाह। तत्त्वत इति॥ यस्य वादिनो मते ब्रह्मैव परमार्थतो जगदात्मना जायते तस्याजस्य जायमानत्वप्रतिज्ञाया व्याहतत्वाज्जातस्यैव जायमानत्वे स्यादनवस्थेत्यर्थः। अद्वैतमावेदयन्त्या द्वैतनिषेधकं श्रुत्या दृश्यत्वजड़त्वादियुक्त्या च तथाविधया निर्द्धारितमर्थं श्लोकाक्षरार्थकथनार्थमनुवदति॥ एवमिति॥ उक्तमेव वस्तु युक्त्यन्तरेण पुनर्निर्द्धारयितुमुत्तरग्रन्थप्रवृत्तिरित्याह। अधुनेति॥ पूर्वार्द्धं शङ्कोत्तरत्वेन व्याख्यातं शङ्कयति। तत्रेति॥ श्लोकः सप्तम्या परामृश्यते। यत्र कदाचिदपि गृह्यते तदत्यन्तासदेव शशविषाणादिवद्द्रष्टव्यम्। प्रमाणाभावे प्रमेयासिद्धेरित्यर्थः।

**असतो मायया जन्म तत्त्वतो नैव युज्यते ।**

---

जायते वादिनो न हि तस्याजं जायत इति शक्यं वक्तुं विरोधात् । ततस्तस्यार्थाज्जातं जायत इत्यापन्नम् । ततश्चानवस्थापाताज्जायमानत्वेन । तस्मादजमेकमेवात्मतत्त्वमिति सिद्धम् ॥२७॥

असद्वादिनामसतो भावस्य मायया तत्त्वतो वा न कथञ्चन जन्म युज्यते । अदृष्टत्वात् । न हि वन्ध्यापुत्रो

---

कार्य्यलिङ्गकानुमानवशादात्मतत्त्वस्याकारणत्वेन सत्त्वनिर्णययात् ॥ नासत्त्वचोद्यमिति दूषयति । तन्नेति ॥ सङ्गृहीतमर्थं दृष्टान्तेन विवृणोति । यथेति ॥ विमतं सदधिष्ठानं कार्य्यत्वात् सम्प्रतिपन्नवदित्यर्थः ॥ उक्तेऽर्थे पूर्वार्द्धाक्षराणि योजयति । यस्मादिति ॥ तस्मात्कारणस्य सत्त्वमविवादमिति शेषः । नासतः इति तस्य निःस्वभावत्वात्कारणत्वायोगादित्यर्थः । न त्विति ॥ तथा भूतस्यान्यथा भूतस्य च जन्मयोगादित्यर्थः । सत इति पञ्चम्यन्तं पदं गृहीत्वा निमित्तकारणपरतया व्याख्यातं सम्प्रति सत इति षष्ठ्यन्तं परमाद्योपादानपरतया व्याख्यां करोति । अथ वेति ॥ यथा रज्ज्वोः सर्पधाराद्याकारेण मायाकृतं जन्म तथैवाद्यस्यापि सद्रूपस्यात्मतत्त्वस्य जगदात्मना जन्म मायाप्रयुक्तं प्रतिपत्तव्यम् । जन्मरहितस्य वस्तुतो जन्मव्याघातादित्यर्थः ॥ उत्तरार्द्धं विभजते । यस्येत्यादिना ॥ मायिकं जन्म न तात्त्विकमिति स्थिते फलितमाह । तस्मादिति ॥२७॥

सत्पूर्व्वकं कार्य्यमिति न व्याप्तिः । असद्वादिभिरसतः सज्जन्माभ्युपगमादित्याशङ्क्याह । असत इति ॥ तत्त्वतोऽतत्त्वतो वा नासतः सदाकारेण जन्मेत्यर्थः ॥ तत्र दृष्टान्तमाह । वन्ध्येति ॥ पूर्व्वार्द्धं व्याक-

वन्ध्यापुत्रो न तत्त्वेन मायया वापि जायते॥२८॥
यथा स्वप्ने द्वयाभासं स्पन्दते मायया मनः।

---

मायया तत्त्वतो वा जायते तस्मादसद्वादो दूरत एवानु-
पपन्न इत्यर्थः ।। २८ ।।

कथं पुनः सतो माययैव जन्मेत्युच्यते। यथा रज्ज्वां
विकल्पितः सर्पो रज्जुरूपेणावेक्ष्यमाणः सन् एवं मनः
परमार्थविज्ञप्त्यात्मरूपेणावेक्ष्यमाणं सत् ग्राह्यग्राहक-
रूपेण द्वयाभासं स्पन्दते स्वप्ने मायया रज्ज्वामिव सर्पः।

---

दोति । असद्वादिनामिति ॥ असतो निःस्वरूपस्य स्वरूपाभावादेव तत्त्व-
तोऽतत्त्वतो वा कार्य्याकारेण न युक्तं जन्मेत्यत्र हेतुमाह। अदृष्टत्वा-
दिति ॥ उत्तरार्द्धं व्याकुर्वन्नदृष्टत्वमेव दृष्टान्तेन स्पष्टयति। न हीति ॥
सद्वादो मायया सम्भवति। असद्वादस्तु तथापि नेति विशेषं दर्शयति।
तस्मादिति ॥ कार्य्यकारणनिरूपणमत्रेति परामृश्यते ॥२८॥

सत एव मायया जन्मेत्युक्तमुपपादयति। यथेति ॥ सत एव
मायया जन्मेत्ययुक्तम् । अवस्थाद्वयेपि द्वैतस्य मनःस्पन्दितत्वस्वी-
कारादिति श्लोकव्यावर्त्त्यञ्चोद्यमुत्थापयति। कथमिति ॥ अधिष्ठान-
रूपेण मनोऽपि सदिति सदृष्टान्तमुत्तरमाह। उच्यत इति ॥ मनसः
सन्मात्रत्वेऽपि कथमनेकधा स्पन्दनमित्याशङ्क्य स्वप्नदृष्टान्तं व्याचष्टे।
यथेति ॥ दार्ष्टान्तिकमाह। तथेत्यादिना ॥ मायाधीनं मनःस्पन्दन-
मवस्तुभूतमिति द्योतयितुमिवेत्युक्तं मनो ब्रह्म चेति कारणद्वयम्॥२९

तर्हि द्वैतस्य सत्त्वमित्याशङ्क्य दृष्टान्तेन निराचष्टे॥ अद्वय-
ञ्चेति ॥ दृष्टान्तभागं विभजते। रज्ज्विति ॥ दृष्टान्ते चैतन्यातिरिक्तस्य

तथा जाग्रद्द्वयाभासं स्पन्दते मायया मनः ॥२९॥
अद्वयञ्च द्वयाभासं मनः स्वप्ने न संशयः।
अद्वयञ्च द्वयाभासं तथा जाग्रन्न संशयः॥३०॥
मनोदृश्यमिदं द्वैतं यत् किञ्चित् सचराचरम् ॥

तथा तद्वदेव जाग्रज्जागरिते स्पन्दते मायया मनः स्पन्दत इवेत्यर्थः ॥ २९ ॥

रज्जुरूपेण सर्प इव परमार्थत आत्मरूपेणाद्वयं सत्तद्-द्वयाभासं मनः स्वप्ने न संशयः । न हि स्वप्ने हस्त्यादि ग्राह्यं ग्राहकं चक्षुरादिद्वयं विज्ञानव्यतिरेकेणास्ति । जाग्रदपि तथैवेत्यर्थः । परमार्थसद्विज्ञानमात्राविशेषात् ॥३०॥

रज्जुसर्पवद्विकल्पनारूपं द्वैतरूपेण मन एव युक्तम् । तत्र किं प्रमाणमित्यन्वयव्यतिरेकलक्षणमनुमानमाह । कथं तेन हि मनसा विकल्प्यमानेन दृश्यं मनोदृश्यमिदं द्वैतं सर्वं मनइति प्रतिज्ञा । तद्भावे भावात्तदभावेऽभावात् ।

ग्राह्यग्राहकभेदस्य मनःस्पन्दितस्यासत्त्वं साधयति । न हीति । तथैव जागरितेऽपि परमार्थात्मस्वरूपेण द्वयं सन्मनो ग्राह्यग्राहकद्वैताकारेणावभासते । तथा च परमार्थसतो विज्ञानमात्रास्यावस्थाद्वयेऽपि विशेषाभावात्तस्मिन्नेवाधिष्ठाने मायाकल्पितं मनःस्पन्दते । द्वयाकारनित्यङ्गीकारात् ॥ न कारणद्वयं शङ्कितव्यमित्याह । जाग्रदपीति ॥ ३० ॥

मनोमात्रं द्वैतमित्यत्र प्रमाणमाह । मनोदृश्यमिति ॥ दृत-

**मनसो ह्यमनीभावे द्वैतं नैवोपलभ्यते ॥३१॥**
**आत्मसत्यानुबोधेन न सङ्कल्पयते यदा।**

---

मनसो ह्यमनीभावे निरुद्धे विवेकदर्शनाभ्यासवैराग्याभ्यां रज्ज्वामिव सर्पे लयङ्गते वा सुषुप्ते द्वैतं नैवोपलभ्यत इत्यभावात्सिद्धं द्वैतस्यासत्त्वमित्यर्थः ॥३१॥

कथं पुनरयं मनोभाव इति। उच्यते। आत्मैव सत्यमात्मसत्यं मृत्तिकावत्। वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमिति श्रुतेः। तस्य शास्त्राचार्य्योपदेशमन्ववबोध आत्मसत्यानुबोधः। तेन सङ्कल्प्याभावात्तया न सङ्क-

---

वृत्तमनूद्य श्लोकतात्पर्य्यमाह। रज्ज्विति॥ तथा रज्जुः सर्पत्वेन विकल्प्यते तथा मनो द्वैतरूपेण विकल्पनात्मकम्। तच्चाविद्याकल्पितमित्युक्तेऽर्थे प्रमाणापेक्षायां विशिष्टमनुमानमुपन्यस्यतीत्यर्थः॥ तदेव प्रश्नपूर्व्वकं प्रकटयन् प्रथमार्द्धाक्षराणि व्याचष्टे। कथमित्यादिना॥ विमतं मनोमात्रं तत्। भावे नियतभावत्वात्। यथा मृद्भावे नियतभावो मृन्मात्रो घटादिरित्यनुमानमाचरयति। द्वैतमिति॥ उक्तमेव व्यतिरेकं स्फोरयन् द्वितीयार्द्धं विभजते। मनसो हीति॥ समाधिस्वापयोर्द्वैतस्यानुपलम्भेऽपि नासत्त्वमित्याशङ्क्य मानाधीना मेयसिद्धिरित्यभिप्रेत्याह। इत्यभावादिति ॥३१॥

मनसो यदमनस्त्वमुक्तं तदुपपादयति। आत्मेति॥ समाधिस्वापयोरननुभवेऽपि मनसः स्वरूपेण नित्यत्वान्नामनस्त्वमित्याक्षिपति। कथमिति॥ सङ्कल्पो हि मनसो व्यवहारिकं रूपम्। सङ्कल्पश्च सङ्कल्प्यापेक्षत्वात्। तदभावे न भवति। सर्व्वात्मैवेत्यवगमे त्वसङ्कल्प्याभावान्मनसो मनस्त्वं न वर्त्तते तथापि स्फुरति चेदात्मैवेति न विवेकिदृष्ट्या मनो नामास्तीति श्लोकाक्षरैरुत्तरमाह। उच्यत इति॥ तस्यैव सत्यत्वे

**अमनस्तां तदा याति ग्राह्याभावे तदग्रहं॥३२॥**
**अकल्पकमजं ज्ञानं ज्ञेयाभिन्नं प्रचक्षते।**

ल्पयते। दाह्याभावे ज्वलनमिवाग्नेः। यदा यस्मिन् काले तदा तस्मिन् काले। अमनस्तामसमनोभावं। याति ग्राह्याभावे। तन्मनोऽग्रहं ग्रहणविकल्पनावर्ज्जितमित्यर्थः॥३२॥

यद्यसदिदं द्वैतं केन समञ्जसमात्मतत्त्वं विबुध्यत इति। उच्यते। अकल्पकं सर्वकल्पनावर्जितम् अत एवाजं ज्ञानं ज्ञप्तिमात्रं ज्ञेयेन परमार्थसता ब्रह्मणा भिन्नं प्रचक्षते कथयन्ति ब्रह्मविदः। न हि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यतेऽग्न्युष्णवत्। विज्ञानमानन्दं ब्रह्म। सत्यं ज्ञानमनन्तं ब्रह्मेत्यादिश्रुतिभ्यः। तस्यैव विशेषणं ब्रह्म ज्ञेयं यस्य स्वस्थं

---

दृष्टान्तमाह। मृत्तिकावदिति॥ यथा घटशरावादिष्वसत्येषु मृत्तिकामात्रमनुस्यूतं सत्यमिष्यते तथैवानात्मसु असत्येष्वात्ममात्रं सत्यमेष्टव्यम्। तत्सत्यमित्यवधारणादेव कारणस्य दृष्टान्तनिविष्टस्य दार्ष्टान्तिकेऽनुषङ्गादित्यर्थः॥ उक्ते दृष्टान्ते प्रमाणमाह। वाचारम्भणमिति॥ अवशिष्टान्यक्षराणि व्याचष्टे। तस्येत्यादिना॥ तेन तत्त्वज्ञानेनात्मातिरिक्तार्थाभावे निश्चिते 'सङ्कल्पविषयाभावनिर्द्धारणया सङ्कल्पाभावे दृष्टान्तमाह। दाह्येति॥ यथाग्नेर्दाह्याभावे ज्वलनं न भवति तथा सङ्कल्प्याभावे सङ्कल्पो निरवकाशः स्यादित्यर्थः॥ सङ्कल्प्याभावे किं मनसो भवति तदाह। यदेति॥३२॥

मनसश्चेन्मनस्त्वं व्यावर्त्तते तर्हि कथमात्मनोऽवबोधो व्यञ्जकाभावादित्याशङ्क्याह। अकल्पकमिति॥ श्लोकव्यावर्त्त्यां शङ्कामाह। यदीति॥ मनोमुख्यस्य द्वैतस्यासत्त्वे व्यञ्जकाभावान्नात्मबोधः सम्भवति। मनसै-

**ब्रह्म ज्ञेयजं नित्यमजेनाजं विबुध्यते ॥३३॥**
**निगृहीतस्य मनसो निर्विकल्पस्य धीमतः ।**

तदिदं ब्रह्म ज्ञेयं औष्ण्यस्येवाग्निवदभिन्नं । तेनात्मस्वरूपेणाजेनज्ञानेनाजं ज्ञेयमात्मतत्त्वं स्वयमेव विबुध्यते अवगच्छति नित्यप्रकाशस्वरूप इव सविता । नित्यविज्ञानैकरसघनत्वान्न ज्ञानान्तरमपेक्ष्यत इत्यर्थः ॥३३॥

आत्मसत्यानुरोधेन सङ्कल्पमकुर्व्वत् वाह्यविषयाभावे निरिन्धनाग्निवत्प्रशान्तं निगृहीतं निरुद्धं मनो भवतीत्युक्तम्। एवञ्च मनसो ह्यमनीभावे द्वैताभावश्चोक्तः । तस्यैवं निगृहीतस्य निरुद्धस्य मनसो निर्विकल्पस्य सर्व्वकल्पनावर्जितस्य धीमतो विवेकवतः प्रचरणं प्रचारो यः स तु प्रचारविशेषेण ज्ञेयो योगिभिः । ननु सर्व्वप्रत्ययाभावे यादृशः सुषुप्तस्यस्य

वातुद्रष्टव्यमिति श्रुतेः । मनसश्चात्मत्वाङ्गीकारादित्यर्थः । स्वरूपभूतेन ज्ञानेनैवात्मनोऽववोधसम्भवान्नातिरिक्ते मनस्यपेक्षेत्युत्तरमाह । उच्यत इति ॥ ज्ञेयाभिन्नं ज्ञानमित्यत्र श्रुतीरुदाहरति । न हीति ॥ सत्यग्नौ तदात्मकमौष्ण्यं न परिलुप्यते तथेत्युदाहरति । अग्न्युष्णवदिति ।। प्रज्ञानं ब्रह्मेत्यादिश्रुतिसङ्ग्रहार्थमादिपदम् ॥ ज्ञेयाभिन्नमित्युक्तं स्फुटयति । तस्येति ॥ आत्मनः स्वयमेवावगतिरूपत्वान्नार्थान्तरापेक्षेत्येतमर्थं दृष्टान्तेन स्फुटयति । नित्येति ॥३३॥

मोक्षमाणस्य ज्ञानफलं स्वर्गवत् न परोक्षं किन्तु तृप्तिवत्प्रत्यक्षं ।। अतश्च प्रकृतज्ञानफलस्य मनोनिरोधस्य प्रत्यक्षत्वाद्दिं प्रसङ्गं करोति । निगृहीतस्येति ॥ न तस्य विज्ञेयत्वं सुषुप्ते प्रसिद्धत्वादित्याशङ्क्याह । सुषुप्त इति ॥ श्लोकाक्षराणि व्याकर्तुं वृत्तं कीर्त्तयति । आत्मेति ॥ तस्य

प्रचारः स तु विज्ञेयः सुषुप्तेऽन्यो न तत्समः॥३४॥

मनसः प्रचारस्तादृश एव निरुद्धस्यापि प्रत्ययाभावाविशेषात्किं तत्र विज्ञेयमिति । अत्रोच्यते । नैवं । यस्मात्सुषुप्तेऽन्यः प्रचारोऽविद्यामोहतमोग्रस्तस्यान्तर्लीनानेकानर्थप्रवृत्तिवीजवासनावतो मनस आत्मसत्यानुबोधहुताशविप्लुष्टाविद्याद्यनर्थप्रवृत्तिवीजस्य निरुद्धस्यान्य एव प्रशान्तसर्व्वक्लेशरजसः स्वतन्त्रः प्रचारः । अतो न तत्समः। तस्मात्युक्तः स विज्ञातुमित्यभिप्रायः ॥३४॥

सत्यस्य प्रागुक्तेनानुबोधेन सम्यक्ज्ञानेन वाह्यस्य विषयस्य सङ्कल्पस्याभावे निरालम्बनस्य प्रचारासम्भवे च मनः सङ्कल्पमकुर्व्वत्प्रशान्तं निरुद्धञ्च प्रभवतीत्यन्वयः ॥ निर्विषयं मनः शाम्यतीत्य दृष्टान्तमाह। निरिन्धनेति ॥ निरुद्धे मनसि मनस्त्वव्यावृत्तो मनःस्पन्दितस्य द्वैतस्याभावमुक्तं स्मारयति । एवञ्चेति ॥ एवं वृत्तमनूद्य पारत्वयस्यार्थमाह । तस्येति ॥ एवं विषयाभावेनेति यावत् ॥ आत्मसत्यानुबोधो विवेकशब्दार्थः । प्रत्यगात्मत्वेन पर्य्यवसानं प्रचारस्तस्य विद्वत्प्रत्यक्षत्वं विवक्षित्वा योगिभिरित्युक्तं ॥ चतुर्थपादव्यावर्त्त्यामाशङ्कामाह । नन्विति ॥ निरुद्धस्यापि मनसः प्रचार इति सम्बन्धः । विशेषप्रत्ययाभावस्य निरोधे स्वापे च विशेषाभावादिति हेत्वर्थः । तत्र प्रचारे प्रसिद्धे सतीति यावत् । चतुर्थपादमुत्तरत्वेनावतारयति । अत्रेति ॥ निरुद्धस्य मनसः सुषुप्तस्येव प्रचारस्य सुज्ञानत्वात् न तत्र ज्ञातव्यमस्तीत्युक्तं प्रत्याह । नैवमिति ॥ विद्याभावव्यावृत्त्यर्थं मोहविशेषणं चित्तभ्रमं व्यावर्त्तयितुं तमोविशेषणं अन्तर्लीना गुप्ता अनेकानर्थफलानां प्रवृत्तीनां बीजभूता वासना यस्मिन्मनसि तस्येति सुषुप्तस्य विशेषणम् । आत्मनः सत्यस्यानुबोधो यो व्याख्यातः स एव हुताशोऽग्निस्तेन विप्लुष्टान्यविद्यादीन्यनेका-

लीयते हि सुषुप्ते तन्निगृहीतं न लीयते।
तदेव निर्भयं ब्रह्म ज्ञानालोकं समन्ततः ॥३५॥

प्रचारभेदे हेतुमाह। लीयते हि। यस्मात्सर्वाभिरविद्यादिप्रत्ययबीजवासनाभिः सह तमोरूपमविशेषरूपं बीजभावमापद्यते तद्विवेकविज्ञानपूर्व्वकं निरुद्धं निगृहीतं सत् न लीयते तमोबीजभावं नापद्यते तस्मादुक्तः प्रचारभेदः सुषुप्तस्य समाहितस्य मनसः। यदा ग्राह्यग्राहकाविद्याकृतमलद्वयवर्जितं तदा परमद्वयं ब्रह्मैव सत्संवृत्तमित्यतस्तदेव निर्भयम्। द्वैतग्रहणस्य भयनिमित्तस्याभावात्। शान्तमभयं ब्रह्म। यद्विद्वान्न बिभेति कुतश्चन। तदेव विशेष्यते ज्ञप्तिर्ज्ञानमात्मस्वभावचैतन्यं तदेव ज्ञानमालोकः प्रकाशो यस्य तद्ब्रह्म ज्ञानालोकं विज्ञानैकर-

नर्थपर्यन्तप्रवृत्तीनां बीजानि यस्य तस्येति निरुद्धस्य विशेषणं प्रकर्षेण शान्तं सर्व्वक्लेशात्मकं रजो यस्येति तस्यैव विशेषणान्तरम्॥ स्वतन्त्रो ब्रह्मस्वरूपावस्थानात्मक इत्यर्थः। यथोक्तस्य प्रचारस्य सुषुप्तप्रचारविसदृशस्य दृष्टान्तत्वे स्थिते फलितमाह। तस्मादिति ॥३४॥

मनसः सुषुप्तस्य समाहितस्य च प्रचारभेदोऽस्तीत्युक्तं तत्र हेतुमाह। लीयते हीति॥ समाहितस्य मनसो द्वैतवर्जितस्य स्वरूपं कथयति। तदेवेति॥ पूर्व्वार्द्धस्य तात्पर्य्यमाह। प्रचारेति॥ मनसः सुषुप्तस्य समाहितस्य चेति वक्तव्यम्। यस्मादित्यस्य तस्मादित्युत्तरेण सम्बन्धः। अविद्यादीत्यादिशब्देनास्मितारागादयो गृह्यन्ते॥ सुषुप्ते मनसो वासनाभिः सह लयप्रकारं कथयति। तमोरूपमिति। आपद्यत इति सम्बन्धः॥ जाड्यं रूपमवस्थान्तरेऽपि तुल्यमित्यतो विशिनष्टि। अवि-

## अजमनिद्रमस्वप्नमनामकमरूपकम् ।

सघनमित्यर्थः । समन्ततः समन्तात्सर्वतो व्योमवन्नैरन्तर्येण व्यापकमित्यर्थः ॥३५॥

जन्मनिमित्ताभावात्सबाह्याभ्यन्तरमजम् । अविद्यानिमित्तं हि जन्म रज्जुसर्पवदित्यवोचाम । सा चाविद्याऽऽत्मसत्यानुबोधेन निरुद्धा । यतोऽजं अत एवानिद्रम् । अविद्यालक्षणाऽनादिमायानिद्रा । स्वापात्प्रबुद्धोऽद्वयस्वरूपेणात्मना ऽतोऽस्वप्नम् । अप्रबोधकृते स्वस्य नामरूपे प्रबोधाच्च ते रज्जुसर्पवद्विनष्टे । न नाम्नाऽभिधीयते ब्रह्म रूप्यते वा न

शेषेत्यादिना ॥ एवमाद्यं पादं व्याख्याय व्याचष्टे । तदिति ॥ पूर्वविभागविभजनेन फलितमाह । तस्मादिति ॥ तदेव निर्भयं ब्रह्मत्वस्यार्थमाह । यदेति ॥ समाहितं मनो ग्राहकमित्यविद्याकृतं यन्मलद्वयं तेन वर्जितं यदा तदेति सम्बन्धः । मनसो ब्रह्मत्वे निर्भयत्वं तस्य फलितमाह । इत्यत इति ॥ तत्र हेतुमतःशब्देन सूचितमाह । द्वैतेति ॥ यदुपशान्तं ब्रह्माभयमित्युक्तं तस्याभयत्वे प्रमाणं सूचयति । यद्विद्वानिति ॥ ननु यथोक्तं ब्रह्म प्रकाशते न वा प्रकाशते । प्रकाशते चेद्भावामेचयामद्वैतव्याघातः । न चेत् प्रकाशते पुरुषार्थत्वासिद्धिरिति तत्राह । तदेवेति ॥ तस्य ब्रह्मत्वसिद्धये परिच्छिन्नत्वं व्यवच्छिनत्ति । समन्तत इति ॥३५॥

प्रकृतमेव प्रकारान्तरे निरूपयति । अजमित्यादिना ॥ न च तस्मिन्निरुपाधिके ब्रह्मणि ज्ञाते कर्त्तव्यशेषः सम्भवतीत्याह । नेति ॥ अजत्वमुपपादयति । जन्मेति ॥ किं तज्जन्मनिमित्तं यदभावादजत्वमुपपाद्यते तदाह । विद्येति ॥ कुतस्तर्हि तन्निवृत्त्या अजत्वसिद्धिस्तत्राह । सा चेति ॥ निमित्तनिवृत्त्या अयत्नसिद्धेर्युक्तमनिद्रत्वं ॥ निद्रा-

**सकृद्विभातं सर्व्वज्ञं नोपचारः कथञ्चन ॥३६॥**

---

केनचित्प्रकारेणोत्यनामकमरूपकञ्च तत् । यतो वाचो निवर्त्तन्त इत्यादिश्रुतेः । किञ्च सकृद्विभातं सदैव विभातं सदा भारूपमग्रहणान्यथाग्रहणाविर्भावतिरोभाववर्जितत्वात् । ग्रहणाग्रहणे हि रात्र्यहनी तमश्चाविद्यालक्षणं सदाऽप्रभावत्वे कारणं तदभावात् नित्यचैतन्यभारूपत्वाच्च युक्तं सकृद्विभातमिति । अत एव सर्व्वञ्च तत् स्वरूपञ्चेति सर्व्वज्ञं । नेह ब्रह्मण्येवंविधे उपचरणमुपचारः कर्त्तव्यः । यथाऽन्येषामात्मस्वरूपव्यतिरेकेण समाधानाद्युपचारः । नित्यशुद्धबुद्धमुक्तस्वभावाद्ब्रह्मणः कथञ्चन न कथञ्चिदपि कर्त्तव्यसम्भवोऽविद्यानाशे इत्यर्थः ॥३६॥

---

शब्देनाविद्याभिलापादित्याह । अत एवेति ॥ विशेषणान्तरं साधयति । अविद्यालक्षणेति ॥ उत्तरविशेषणाद्वयं विवृणोति । अप्रबोधेति ॥ ब्रह्मणो नामरूपवत्त्वाभावे प्रमाणमाह । यत इति ॥ विशेषणान्तरमाह । किञ्चेति ॥ सदाभासरूपत्वे हेतुमाह । अग्रहणेति ॥ जीवे ह्युपाधिस्थे ऽहंरूपग्रहणानुदये तिरोभावः कर्त्ताहमित्यन्यथाग्रहणोदये चाविर्भावो भवति तदभावाद्भास्वरूपमेव सदा ब्रह्मेत्यर्थः । श्रुत्याचार्य्योपदेशात् पूर्व्वं ब्रह्मण्यग्रहणं तदुपदेशादूर्ध्वन्तद्ग्रहणमिति प्रसिद्धं ब्रह्मण्यपि ग्रहणाग्रहणे स्यातामित्याशङ्क्याह । ग्रहणेति ॥ यथा सवित्रपेक्षया रात्र्यहनी न स्तः किन्तूदयास्तमयकल्पनया कल्प्येते तथा ब्रह्मस्वभावालोचनया ग्रहणाग्रहणे न विद्येते किन्तूपाधिद्वारा कल्प्येते । तेन ब्रह्मणः सदाभारूपत्वमविरुद्धमित्यर्थः । इतश्च निरुपाधिकं ब्रह्म सदा विभातमेषितव्यमित्याह । तमश्चेति ॥ अप्रभातत्व

अजातस्यैव सर्वस्य चित्तदृश्यं हि तद्यतः ॥७७॥
बुद्धा निमित्ततां सत्यां हेतुं पृथगनाप्नुवन् ।

न्या मोक्षाख्याऽनुत्पत्तिः सा सर्वदा सर्वावस्थासु समा नि-
र्विशेषाऽद्वया च । पूर्वमप्यजातस्यैवाऽनुत्पन्नस्य चित्तस्य
सर्वस्याद्वयस्येत्यर्थः । यस्मात्प्रागपि विज्ञानाच्चित्तदृश्यं तत्
द्वयं जन्म च तस्मादजातस्य सर्वस्य सर्वदा चित्तस्य समा-
ऽद्वयैवाऽनुत्पत्तिर्न पुनः कदाचिद्भवति कदाचिद्वा न भवति
सर्वदैकरूपैवेत्यर्थः ॥७७॥

यथोक्तेन न्यायेन जन्मनिमित्तस्य द्वयाभावादनिमि-
त्ततां सत्यां परमार्थरूपां बुद्धा हेतुं धर्मादिकारणं

न जायत इत्युक्तमित्याह । सर्वदेति ॥ न केवलं मोक्षावस्थैव
चैतन्यस्याजत्वं किन्तु घटाद्युपरक्तस्यापीत्यभिप्रेत्याह । सर्वावस्था-
स्विति ॥ सर्वस्यैव चित्तप्रतिबिम्बस्य बिम्बकल्पब्रह्मरूपत्वादिति
हेतुमभिप्रेत्याह । अद्वया चेति ॥ तृतीयपादार्थं कथयति । पूर्व-
मपीति ॥ तत्र हेतुमाह । यस्मादिति ॥ तस्माद्रज्जुसर्पवत् द्वैतस्य
जन्मनश्च दृश्यत्वाद्वस्तुतोऽसत्त्वादिति यावत् ॥७७॥

द्वयाभावं स बुद्ध्वैव निर्निमित्तो न जायत इत्युक्तं तदिदानीं
प्रपञ्चयति । बुद्धेति ॥ द्वैताभावोपलक्षितां सत्तामनाद्यनन्तां पर-
मार्थभूतां प्रतिपद्य देवादियोनिप्राप्तौ धर्मादिहेतुमसाङ्कर्यैणाऽनुतिष्ठन्
यदा विद्वानवतिष्ठते तदा सर्वसंसारकारणाहितं पदमप्राप्नुवानो न
पुनः शरीरं गृह्णातीत्यर्थः ॥ श्लोकं व्याचष्टे । यथोक्तेति ॥ दृश्य-
त्वादिना हेतुना द्वैतस्य रज्जुसर्पादिवदेव कल्पितत्वं यथोक्तन्यायेन
चैतन्यस्य जन्मनि यत् द्वयं निमित्तं तस्याभावतामभावोपलक्षितां
सत्तां निमित्ताभावादेवानाद्यनन्तां तस्मादेव सत्यां बुद्धेति योजना ।

**वीतशोकं तथा काममभयं पदमश्नुते ॥७८॥**
**अभूताभिनिवेशाद्धि सदृशे तत्प्रवर्त्तते ।**
**वस्त्वभावं स बुद्धैव निःसङ्गं विनिवर्त्तते ॥७६॥**

---

देवादियोनिप्राप्तये पृथगनाप्नुवन्ननुपाददानस्त्यक्तवाह्यैषणः सन् कामशोकादिवर्जितमविद्यादिरहितमभयम्पदमश्नुते पुनर्न जायत इत्यर्थः ॥७८॥

यस्मादभूताभिनिवेशादसति द्वयेऽद्वयास्तित्वनिश्चयोऽभूताभिनिवेशस्तस्मादविद्याव्यामोहरूपाद्धि सदृशे तदनुरूपे तच्चित्तं प्रवर्त्तते । तस्य द्वयस्य वस्तुनोऽभावं यदा बुद्धवास्तदा तस्मान्निःसङ्गं निरपेक्षं सद्विनिवर्त्ततेऽभूताभिनिवेशविषयात् ॥७६॥

---

पृथगिति देवतादिप्रकृष्टजन्मप्राप्तये धर्म्मं मनुष्यत्वप्राप्तये धर्म्माधर्म्मौ तिर्य्यगाद्यधमयोनिप्राप्तये चाधर्म्ममसाकुर्य्येवानानुतिष्ठन्निति यावत् प्रकृतस्य ज्ञानवतो धर्म्माद्यनुष्ठानायोगे हेतुं सूचयति । त्यक्तेति ॥ यावत् ॥ कार्य्यभूतसर्व्वानर्थराहित्यमुक्त्वा पुनरभयमित्यस्यार्थमाह । अविद्येति ॥७८॥

यथोक्तपदप्राप्तिः सदास्तीत्याशङ्क्याह । अभूतेति ॥ व्यभिचारित्वादिहेतुरद्वयात्मदर्शनेन वा साध्यसाधनात्मनो द्वैतस्य वस्तुनोऽभावं यदा पुमान् वुद्धवांस्तदा वस्त्वभावं पुरुषो बुद्धेव निःसङ्गं चित्तं यथा पुनर्न प्रवर्त्तते तथा तन्निवृत्तिमनुवृत्तो भवतीत्यर्थः ॥ अक्षराणि विभजते । यस्मादित्यादिना ॥ यस्मादभूताभिनिवेशात्तदनुरूपे चित्तं प्रवर्त्तते तस्मान्निःसङ्गं निवर्त्तते इति सम्बन्धः ॥ अभूताभिनिवेशमेव विशदयति । असतीति ॥ अभिनिवेशस्याऽविद्याव्यामोहरूपत्वमन्वय

निवृत्तस्याप्रवृत्तस्य निश्चला हि तदा स्थितिः।
विषयः स हि बुद्धानां तत्साम्यमजमद्वयम्॥८०॥
अजमनिद्रमस्वप्नं प्रभातम्भवति स्वयम्।
सकृद्विभातो ह्येवैष धर्म्मो धातुः स्वभावतः॥८१॥

---

निवृत्तस्य द्वैतविषयाद्विषयान्तरे चाप्रवृत्तस्याभावदर्शनेन चित्तस्य निश्चला चलनवर्जिता स्वरूपैव तदा स्थितिर्य्यैषा ब्रह्मरूपा स्थितिश्चित्तस्याद्वयविज्ञानैकरसघनलक्षणा। स हि यस्माद्विषयगोचरः परमार्थदर्शिनां बुद्धानां तस्मात्साम्यं परं निर्व्विशेषमजमद्वयञ्च॥८०॥

पुनरपि कीदृशश्चाऽसौ बुद्धानां विषय इत्याह। स्वयमेव तत्प्रभातं भवति नादित्याद्यपेक्षं स्वयं ज्योतिःस्वभावमित्यर्थः। सकृद्विभातः सदैव विभात इत्येतत्।

---

व्यतिरेकसिद्धमिति वक्तुं हीत्युक्तम्। तदनुरूप इत्यत्र तच्छब्देनाभिवेशो न्गृह्यते तस्येत्यभिनिवेशविषयस्येत्यर्थः॥७९॥

अभयं पदमश्नुत इत्यत्र हेतुमाह। निवृत्तस्येति। विद्वदनुभवैकगम्यत्वादशेषकल्पनातीतत्वाच्च सिद्धं मोक्षस्याभयादिरूपत्वमित्याह। विषय इति॥ अक्षरार्थं कथयति। निवृत्तस्येत्यादिना॥८०॥

यो मोक्षो विदुषां विषयो दर्शितस्तमेव पुनर्विशिनष्टि। अजमिति॥ स्वयम्प्रभातत्वे हेतुमाह। सकृदिति॥ कल्पितस्य सर्व्वस्य धारणाद्धर्म्मो नाशौ कथमपि परतन्त्रो भवितुमर्हत्यनवस्थानादतः स्वयं ज्योतिरित्याह। धर्म्म इति॥ किञ्च धीयते निधीयते सर्व्वं निःशेष्यते सुषुप्तादावस्मिन्निति धातुरात्मोच्यते। तथा च सर्व्वस्य ज्ञानसाधनस्योपसंहारेऽपि सुषुप्तौ साक्षितयाऽऽत्मनः सिद्धेः स्वयं ज्योतिष्ट-

वीतशोकं तथा काममभयं पदमश्नुते ॥७८॥
अभूताभिनिवेशाद्धि सदृशे तत्प्रवर्त्तते ।
वस्त्वभावं स बुद्ध्वैव निःसङ्गं विनिवर्त्तते ॥७९॥

---

देवादियोनिप्राप्तये पृथगनाम्नुवन्ननुपाददानस्त्यक्तवाह्यैषणः सन् कामशोकादिवर्जितमविद्यादिरहितमभयम्पदमश्नुते पुनर्न जायत इत्यर्थः ॥७८॥

यस्मादभूताभिनिवेशादसति द्वयेऽद्वयास्तित्वनिश्चयोऽभूताभिनिवेशस्तस्मादविद्याव्यामोहरूपाद्धि सदृशे तदनुरूपे तच्चित्तं प्रवर्त्तते । तस्य द्वयस्य वस्तुनोऽभावं यदा बुद्धवांस्तदा तस्मान्निःसङ्गं निरपेक्षं सद्विनिवर्त्ततेऽभूताभिनिवेशविषयात् ॥७९॥

---

पृथगिति देवतादिप्रकृष्टजन्मप्राप्तये धर्म्मं मनुष्यत्वप्राप्तये धर्म्माधर्म्मौ तिर्य्यगाद्यधमयोनिप्राप्तये चाधर्म्ममसाङ्कर्य्येणाननुतिष्ठन्निति यावत् प्रकृतस्य ज्ञानवतो धर्म्माद्यनुष्ठानायोगे हेतुं सूचयति । त्यक्तेति ॥ यावत् ॥ कार्य्यभूतसर्व्वानर्थराहित्यमुक्त्वा पुनरभयमित्यस्यार्थमाह । ह्यविद्येति ॥७८॥

यथोक्तपदप्राप्तिः सदास्तीत्याशङ्क्याह । अभूतेति ॥ व्यभिचारित्वादिहेतुरद्वयात्मदर्शनेन वा साध्यसाधनात्मनो द्वैतस्य वस्तुनोऽभावं यदा पुमान् बुद्धवांस्तदा वस्त्वभावं पुरुषो बुद्ध्वैव निःसङ्गं चित्तं यथा पुनर्न प्रवर्त्तते तथा तन्निवृत्तिमनुवृत्तो भवतीत्यर्थः ॥ अक्षराणि विभजते । यस्मादित्यादिना ॥ यस्मादभूताभिनिवेशात्तदनुरूपे चित्तं प्रवर्त्तते तस्मान्निःसङ्गं निवर्त्तते इति सम्बन्धः ॥ अभूताभिनिवेशमेव विशदयति । असतीति ॥ अभिनिवेशस्याऽविद्याव्यामोहरूपत्वमन्वय

निवृत्तस्याप्रवृत्तस्य निश्चला हि तदा स्थितिः।
विषयः स हि बुद्धानां तत्साम्यमजमद्वयम्॥८०॥
अजमनिद्रमस्वप्नं प्रभातम्भवति स्वयम्।
सकृद्विभातो ह्येवैष धर्म्मो धातुः स्वभावतः॥८१॥

---

निवृत्तस्य द्वैतविषयाद्विषयान्तरे चाप्रवृत्तस्याभावदर्शनेन चित्तस्य निश्चला चलनवर्जिता स्वरूपैव तदा स्थितिर्य्यैषा ब्रह्मरूपा स्थितिश्चित्तस्याद्वयविज्ञानैकरसघनलक्षणा। स हि यस्माद्विषयगोचरः परमार्थदर्शिनां बुद्धानां तस्मात्साम्यं परं निर्व्विशेषमजमद्वयञ्च॥८०॥

पुनरपि कीदृशश्चाऽसौ बुद्धानां विषय इत्याह। स्वयमेव तत्प्रभातं भवति नादित्याद्यपेक्षं स्वयं ज्योतिःस्वभावमित्यर्थः। सकृद्विभातः सदैव विभात इत्येतत्।

---

व्यतिरेकसिद्धमिति वक्तुं हीत्युक्तम्। तदनुरूप इत्यत्र तच्छब्देनाभिवेशो गृह्यते तस्येत्यभिनिवेशविषयस्येत्यर्थः॥७९॥

अभयं पदमश्नुत इत्यत्र हेतुमाह। निवृत्तस्येति। विद्वदनुभवैकगम्यत्वादशेषकल्पनातीतत्वाच्च सिद्धं मोक्षस्याभयादिरूपत्वमित्याह। विषय इति॥ अक्षरार्थं कथयति। निवृत्तस्येत्यादिना॥८०॥

यो मोक्षो विदुषां विषयो दर्शितस्तमेव पुनर्विशिनष्टि। अजमिति॥ स्वयम्प्रभातत्वे हेतुमाह। सकृदिति॥ कल्पितस्य सर्व्वस्य धारणाद्धर्म्मो नाशो कथमपि परतन्त्रो भवितुमर्हत्यनवस्थानादतः स्वयं ज्योतिरित्याह। धर्म्म इति॥ किञ्च धीयते निधीयते सर्व्वं निःक्षिप्यते सुषुप्तादावस्मिन्निति धातुरात्मोच्यते। तथा च सर्व्वस्य ज्ञानसाधनस्योपसंहारेऽपि सुषुप्तौ साक्षितयाऽऽत्मनः सिद्धेः स्वयं ज्योतिष्ट-

**सुखमाव्रियते नित्यं दुःखं विव्रियते सदा ।**
**यस्य कस्य च धर्म्मस्य ग्रहेण भगवानसौ ॥८२॥**

---

एष एवं लक्षण आत्माख्यो धर्म्मो धातुः स्वभावतो वस्तु स्वभावत इत्यर्थः ॥८१॥

एवमुच्यमानमपि परमार्थतत्त्वं कस्मात् लौकिकैर्न गृह्यते इत्युच्यते। यस्मात् यस्य कस्यचित् द्वयवस्तुनो धर्म्मस्य ग्रहेण ग्रहणावेशेन मिथ्याभिनिविष्टतया सुखमाव्रियते ऽनायासेनाच्छाद्यत इत्यर्थः। अद्वयोपलब्धिनिमित्तं हि तत्रावरणं न यत्नान्तरमपेक्षते। दुःखञ्च विव्रियते प्रकटीक्रियते। परमार्थज्ञानस्य दुर्लभत्वात्। भग-

---

मेष्टव्यमित्याह। धातुरिति॥ किञ्चात्मत्वादेवात्मनः स्वयं ज्योतिष्ट्वमन्यथा घटवदनात्मत्वप्रसङ्गादित्याह। स्वभावत इति॥ आकाङ्क्षापूर्व्वकं श्लोकमवतार्य्य तदक्षराणि योजयति। पुनरपीत्यादिना॥ धातुस्वभावत इत्येकपादं गृहीत्वा व्याचष्टे। वस्त्विति॥८१॥

विवक्षितार्थस्तु पूर्व्वस्मान्नातिरिच्यते। आत्मा चेदुक्तलक्षणो विवक्षितस्तर्हि किमित्यसौ श्रुत्याचार्य्योपदिष्टस्तथैव सर्व्वैर्न गृह्यते तत्राह। सुखमिति॥ मिथ्याभिनिवेशादात्मतत्त्वस्वरूपसुखं सदैवाच्छाद्यते तस्मादेव तस्तुतोऽसदपि दुःखं सर्व्वदा प्रकटीक्रियते तेनाऽसौ भगवान् आत्मा श्रुत्याचार्य्योपदिष्टोऽपि न विस्पष्टो भवतीत्यर्थः॥ श्लोकव्यावर्त्त्यां शङ्कां दर्शयति। एवमिति॥ स्वयं ज्योतिष्ट्वादि प्रागुपदिष्टप्रकारेणेति यावत्॥ तत्र श्लोकमवतार्य्य व्याकरोति। उच्यत इत्यादिना॥ द्वैते गृह्यमाणेऽपि कथमात्मस्वरूपस्य सुखस्वरूपस्यानायासेनाच्छाद्यमानत्वं तत्राह। द्वयेति॥ इतश्चात्मतत्त्वं यथावन्न प्रतिभातीत्याह। दुःखञ्चेति॥ यथावदात्मप्रथाभावे हेतुमाह। परमार्थेति॥ देवो

अस्ति नास्त्यस्ति नास्तीति नास्तीति नास्ति वा पुनः ।

---

वानसावात्मा ऽद्वयो देव इत्यर्थः । अतो वेदान्तैराचार्य्यैश्च वक्तृभ उच्यमानोऽपि नैव ज्ञातु शक्य इत्यर्थः । आश्चर्य्यो वक्ता कुशलोऽस्य लब्धेति श्रुतेः ॥८२॥

अस्ति नास्तीत्यादि सूक्ष्मविषया अपि पण्डितानां ग्रहा भगवतः परमात्मन आवरणा एव किमुत मूढजनबुद्धिलक्षणा इत्येवमर्थं प्रदर्शयन्नाह । अस्तीति । अस्त्यात्मेति वादी कश्चित्प्रतिपद्यते । नास्तीत्यपरो वैनाशिकः । अस्ति नास्तीत्यपरोऽर्द्धवैनाशिकः सदसद्वादी दिग्वासाः । नास्ति नास्तीत्यत्यन्तशून्यवादी । तत्रास्तिभावश्चलः घटाद्यनित्यविलक्षणत्वात् । नास्तिभावः स्थिरः सदा विशेषत्वात् ।

---

याथातथ्येन न भातीति शेषः ॥ सुखस्य विद्यमानस्य आवरणमविद्यमानस्य दुःखस्य विवरणमिति स्थिते फलितमाह । अत इति ॥ श्रुत्याचार्य्योपदेशस्य तात्पर्य्यशून्यत्वं वारयति । वक्तृभ इति ॥ आत्मनि प्रवचनस्य परिज्ञानस्य दुर्लभत्वे प्रमाणमाह । आश्चर्य्य इति ।८२॥

परीक्षकाभिनिवेशानामप्यात्मावरणत्वे सति लौकिकपुरुषाऽभिनिवेशानां तदावरणत्वं किमु वक्तव्यमिति साधयति । अस्तीत्यादिना ॥ श्लोकतात्पर्य्यमाह । अस्तीति ॥ प्रमाता देहादिव्यतिरिक्तोऽस्तीत्याद्यो वैशेषिकादिपक्षः । देहादिव्यतिरिक्तोऽपि नासौ बुद्धेर्व्यतिरिच्यते । क्षणिकस्य विज्ञानस्यैवात्मत्वादिति द्वितीयो विज्ञानवादिपक्षः । तृतीयो दिगम्बरपक्षः । चतुर्थे तु शून्यवादिपक्षे शून्यस्यात्यन्तिकत्वद्योतनार्था वीप्सा । द्वितीयार्द्धं विभजते । तत्रेत्यादिना ॥ अनित्येभ्यो घटादिभ्यः सुखाद्याकारपरिणामितया वैलक्षण्यादस्तिभावो योऽयं प्रमातोक्तः स चलः स विशेषः सन् परिणामीत्यर्थः । देहाद्यतिरि-

सुखमाव्रियते नित्यं दुःखं विव्रियते सदा ।
यस्य कस्य च धर्म्मस्य ग्रहेण भगवानसौ ॥८२॥

एष एवं लक्षण आत्माख्यो धर्म्मो धातुः स्वभावतो वस्तु स्वभावत इत्यर्थः ॥८१॥

एवमुच्यमानमपि परमार्थतत्त्वं कस्मात् लौकिकैर्न गृह्यते इत्युच्यते। यस्मात् यस्य कस्यचित् द्वयवस्तुनो धर्म्मस्य ग्रहेण ग्रहणावेशेन मिथ्याभिनिविष्टतया सुखमाव्रियते ऽनायासेनाच्छाद्यत इत्यर्थः। अद्वयोपलब्धिनिमित्तं हि तत्रावरणं न यत्नान्तरमपेक्षते। दुःखञ्च विव्रियते प्रकटीक्रियते। परमार्थज्ञानस्य दुर्लभत्वात्। भग-

मेष्टव्यमित्याह। धातुरिति॥ किञ्चात्मत्वादेवात्मनः स्वयं ज्योतिष्ट्वमन्यथा घटवदनात्मत्वप्रसङ्गादित्याह। स्वभावत इति॥ आकाङ्क्षापूर्व्वकं श्लोकमवतार्य्य तदक्षराणि योजयति। पुनरपीत्यादिना॥ धातुस्वभावत इत्येकपादं गृहीत्वा व्याचष्टे। वस्त्विति॥८१॥

विवक्षितार्थस्तु पूर्व्वस्मान्नातिरिच्यते। आत्मा चेदुक्तलक्षणो विवक्षितस्तर्हि किमित्यसौ श्रुत्याचार्य्योपदिष्टस्तथैव सर्व्वैर्न गृह्यते तत्राह। सुखमिति॥ मिथ्याभिनिवेशादात्मतत्त्वस्वरूपसुखं सदैवाच्छाद्यते तस्मादेव तत्त्वतोऽसदपि दुःखं सर्व्वदा प्रकटीक्रियते तेनाऽसौ भगवान् आत्मा श्रुत्याचार्य्योपदिष्टोऽपि न विस्पष्टो भवतीत्यर्थः॥ श्लोकव्यावर्त्त्यां शङ्कां दर्शयति। एवमिति॥ स्वयं ज्योतिष्ट्वादि प्रागुपदिष्टप्रकारेणेति यावत्॥ तत्र श्लोकमवतार्य्य व्याकरोति। उच्यत इत्यादिना॥ द्वैते गृह्यमाणेऽपि कथमात्मस्वरूपस्य सुखस्वरूपस्यानायासेनाच्छाद्यमानत्वं तत्राह। द्वयेति॥ इतश्चात्मतत्त्वं यथावन्न प्रतिभातीत्याह। दुःखञ्चेति॥ यथावदात्मप्रथाभावे हेतुमाह। परमार्थेति॥ देवो

**अस्ति नास्त्यस्ति नास्तीति नास्तीति नास्ति वा पुनः ।**

---

वानसावात्मा ऽद्वयो देव इत्यर्थः । अतो वेदान्तैराचार्य्यैश्च बहुधा उच्यमानोऽपि नैव ज्ञातुं शक्य इत्यर्थः । आश्चर्य्यो वक्ता कुशलोऽस्य लब्धेति श्रुतेः ॥८२॥

अस्ति नास्तीत्यादि सूक्ष्मविषया अपि पण्डितानां ग्रहा भगवतः परमात्मन आवरणा एव किमुत मूढजनबुद्धि-लक्षणा इत्येवमर्थं प्रदर्शयन्नाह । अस्तीति । अस्त्यात्मेति वादी कश्चित्प्रतिपद्यते । नास्तीत्यपरो वैनाशिकः । अस्ति नास्तीत्यपरोऽर्द्धवैनाशिकः सदसद्वादी दिग्वासाः । नास्ति नास्तीत्यत्यन्तशून्यवादी । तत्रास्तिभावश्चलः घटाद्यनित्य-विलक्षणत्वात् । नास्तिभावः स्थिरः सदा विशेषत्वात् ।

---

याथातथ्येन न भातीति शेषः ॥ सुखस्य विद्यमानस्य आवरणमविद्य-मानस्य दुःखस्य विवरणमिति स्थिते फलितमाह । अत इति ॥ श्रुत्या-चार्य्योपदेशस्य तात्पर्य्यशून्यत्वं वारयति । बहुश इति ॥ आत्मनि प्रवचनस्य परिज्ञानस्य दुर्लभत्वे प्रमाणमाह । आश्चर्य्य इति ।८२॥

परीक्षकाभिनिवेशानामप्यात्मावरणत्वे सति लौकिकपुरुषाऽभि-निवेशानां तदावरणत्वं किमु वक्तव्यमिति साधयति । अस्तीत्यादिना ॥ श्लोकतात्पर्य्यमाह । अस्तीति ॥ प्रमाता देहादिव्यतिरिक्तोऽस्तीत्याद्यो वैशेषिकादिपक्षः । देहादिव्यतिरिक्तोऽपि नासौ बुद्धेर्व्यतिरिच्यते । क्षणिकस्य विज्ञानस्यैवात्मत्वादिति द्वितीयो विज्ञानवादिपक्षः । तृ-तीयो दिगम्बरपक्षः । चतुर्थे तु शून्यवादिपक्षे शून्यस्यात्यन्तिकत्व-द्योतनार्था वीप्सा । द्वितीयार्द्धं विभजते । तत्रेत्यादिना ॥ अनित्येभ्यो घटादिभ्यः सुखाद्याकारपरिणामितया वैलक्षण्यादस्तिभावो योऽयं प्रमातोक्तः स चलः स विशेषः सन् परिणामीत्यर्थः । देहाद्यतिरि-

चलस्थिरोभयाभावैरावृणोत्येव बालिशः ॥८३॥
कोट्यश्चतस्र एतास्तु ग्रहैर्यासां सदा वृतः ।

---

उभयश्चलस्थिरविषयत्वात् सदसद्भावोऽभावोत्यन्ताभावः । प्रकारचतुष्टयस्यापि तैरेतैश्चलस्थिरोभयाभावैः सदसदादिवादी सर्व्वोऽपि भगवन्तमावृणोत्येव बालिशोऽविवेकी । यद्यपि पण्डितो बालिश एव परमार्थतत्त्वानवबोधात् किमु स्वभावमूढो जन इत्यभिप्रायः ॥८३॥

कीदृक पुनः परमार्थतत्त्वं यदवबोधादबालिशः पण्डितो भवतीत्याह । कोट्यः प्रावादुकशास्त्रनिर्णयान्ता एता उक्ता अस्तिनास्तीत्याद्याश्चतस्रो यासां कोटीनां ग्रहैर्ग्रहणैरुपलब्धिनिश्चयैः सदा सर्व्वदा आवृत आच्छादितस्तेषामेव प्रावादुकानां यः स भगवान् आभिरस्पृ-

---

क्तोऽपि प्रमाता व्युत्पत्तिरिक्तो नास्तीति । यो नास्तिभावः स स्थिरो निर्व्विशेषत्वात्तदभावस्येत्याह । नास्तिभाव इति । प्रकारचतुष्टयास्यास्तित्वस्य नास्तीत्यस्यास्तिनास्तित्वस्य नास्तिनास्तित्वस्य चेति यावत् । बालिशत्वे सिद्धे फले तं न्यायमुपसंहरति । किम्विति ॥८३॥

आत्मनो यदावरणमुक्तं तदुपसंहरति । कोट्य इति ॥ यासां कोटीनां परीक्षकपरिकल्पितनिर्णयनिरूपणीयानां ग्रहैरभिनिवेशविशेषैरात्मा सदा समावृतस्ताः खल्वेताश्चतस्रः कोट्यः सन्ति । तथा चात्मनो न यथावदात्मप्रथनमित्यर्थः ॥ यदि सदात्मा समावृतो न तर्हि तस्य ज्ञानं ज्ञाने वा नास्ति नैराकाङ्क्ष्यं ज्ञातव्यान्तरपरिशेषादित्याशङ्क्याह । भगवानिति ॥ आत्मा हि वस्तुतोऽस्तीत्यादिकल्पनारहितो येनोपनिषत्प्रवणेन प्रतिपन्नः स सर्व्वज्ञो ज्ञातव्यान्तरमपश्यन् परमार्थपण्डितो निराकाङ्क्षो भवतीत्यर्थः ॥ श्लोकनिरस्यामाकाङ्क्षां दर्शयति ।

भगवानाभिरस्पृष्टो येन दृष्टः स सर्व्वदृक् ॥८४॥
प्राप्य सर्व्वज्ञतां कृत्स्नां ब्राह्मण्यं पदम[illegible]न् ।
अनापन्नादिमध्यान्तं किमतः परमीह[illegible] ॥८५॥

---

नास्तीत्यादिकोटिभिश्चतसृभिरस्पृष्टोऽस्त्यादि विकल्पनावर्जित इत्येतत् । येन मुनिना दृष्टो ज्ञातो वेदान्तेष्वौपनिषदः पुरुषः स सर्व्वदृक् सर्व्वज्ञः परमार्थपण्डित इत्यर्थः ॥८४॥

प्राप्यैतां यथोक्तां कृत्स्नां समस्तां सर्व्वज्ञतां ब्राह्मण्यं पदं स ब्राह्मणः । एष नित्यो महिमेति श्रुतेः । अनापन्नादिमध्यान्तम् । आदिमध्यान्ता उत्पत्तिस्थितिलया अनापन्ना अप्राप्ता यस्माद्दृयपदस्य न विद्यन्ते तदनापन्नादिमध्यान्तं ब्राह्मण्यं पदम् । तदेव प्राप्य लब्ध्वा किमतः परस्मादात्म-

---

कीदृगिति ॥ किमिति परमार्थतत्त्वं जिज्ञास्यते । तज्ज्ञानात् पाण्डित्यसिद्धयर्थमित्याह । यदवबोधादिति ॥ तत्र श्लोकमवतार्य्य व्याकरोति । आहेत्यादिना ॥ तेषामेव प्रावादुकानामुपलब्धिनिश्चयैरिति सम्बन्धः । यो भगवानुक्तविशेषणः स येनेति योजना ॥८४॥

ज्ञानवतोऽपि यावज्जीवादिश्रुतिवशादग्निहोत्रादि कर्त्तव्यमित्याशङ्क्याह । प्राप्येति ॥ यथोक्तां चतुःकोटिविनिर्म्मुक्तामिति यावत् । समस्तत्वं ज्ञातव्यशेषशून्यत्वं परिपूर्णज्ञप्तिरूपत्वम् ॥ तत्र ब्राह्मण्यपदप्रयोगे प्रमाणमाह । स ब्राह्मण इति ॥ स विद्वानपरोक्षीकृतब्रह्मतत्त्वः सन् फलावस्थो मुख्यो ब्राह्मणो भवतीत्यर्थः । ब्राह्मणस्य ब्रह्मविदो विद्याफलावस्थस्यैव स्वभावो महिमेत्युक्तो निर्व्विकारो वृद्धिह्रासाभावादेकरूपो भवतीति वाक्यान्तरस्यार्थः ॥

विप्राणां विनयो ह्येष शमः प्राकृत उच्यते ।
दमः प्रकृतिदान्तत्वादेवं विद्वाञ्छमं व्रजेत् ॥८६॥

---

लाभादूर्ध्वमीहते चेष्टते निष्प्रयोजनमित्यर्थः । नैव तस्य कृतेनार्थ इत्यादिगीतास्मृतेः ॥८५॥

विप्राणां ब्राह्मणानां विनयो विनीतत्वं स्वाभाविकं यदेतदात्मस्वरूपेणावस्थानम् । एष विनयः शमोऽप्येष एव प्राकृतः स्वाभाविकोऽकृतक उच्यते । दमोऽप्येष एव प्रकृतिदान्तत्वात् स्वभावत एव चोपशान्तरूपत्वाद्ब्रह्मणः । एवं यथोक्तं स्वभावोपशान्तं ब्रह्म विद्वाञ्छमम् उपशान्तिं स्वाभाविकीं ब्रह्मस्वरूपां व्रजेत् ब्रह्मस्वरूपेणाऽवतिष्ठत इत्यर्थः ॥८६।

---

तदेव पदं विशिनष्टि । अनापन्नादिमध्यान्तमिति ॥ तद्व्याकरोति । आदीति ॥ अन्वयं दर्शयन्नवशिष्टं व्याचष्टे । तदेव प्राप्येति ॥ ज्ञानवान् फलावस्थः सन् कृतकृत्यो न तस्य किञ्चिदस्ति कर्त्तव्यमित्यस्मिन्नर्थे भगवद्वाक्यं प्रमाणयति । नैव तस्येति ॥८५॥

यावज्जीवादिस्मृतेरविद्वद्विषयत्वाद्विदुषो नाग्निहोत्रादि कर्त्तव्यमित्युक्तम् । इदानीं तस्यापि नियोगतोऽस्ति कर्त्तव्यमित्याशङ्क्याह । विप्राणामिति ॥ ब्रह्मविदां ब्राह्मणानामेष विनयः स्वभावतो न नियोगाधीनां कर्त्तव्यतामधिकरोति । शमोऽपि स्वाभाविको न नियोगेन क्रियते दमोऽपि स्वभावसिद्धत्वान्न नियोगमपेक्षते ॥ एवं कूटस्थमात्मतत्त्वं विद्वान् पुमानशेषविक्रियाशून्यब्रह्मस्वरूपेण तिष्ठतीत्यर्थः ॥ अक्षरार्थं कथयति । विप्राणामित्यादिना ॥ तमेव स्वाभाविकं विनयं विवृणोति । यदेतदिति ॥८६॥

सवस्तु सोपलम्भञ्च द्वयं लौकिकमिष्यति।

एवमन्योन्यविरुद्धत्वात्संसारकारणानि रा[illegible]दोषा-स्पदानि प्रावादुकानां दर्शनानि। अतो मिथ्यादर्शनानि तानीति तद्युक्तिभिरेव दर्शयित्वा चतुष्कोटिवर्जितत्वाद्रा-गादिदोषानास्पदं स्वभावशान्तमद्वैतदर्शनमेव सम्यग्दर्श-नमित्युपसंहृतम्। अथेदानीं स्वप्रक्रियाप्रदर्शनार्थ आरम्भः सवस्तु संवृतिः। सता वस्तुना सह वर्त्तत इति सवस्तु। तथा चोपलब्धिरुपलम्भः तेन सह वर्त्तत इति सोपलम्भः। सोपलम्भञ्च शास्त्रादिसर्व्वव्यवहारास्पदं ग्राह्यग्राहक-लक्षणं द्वयं लौकिकं लोकादनपेतं लौकिकं जागरित-मित्येतत्। एवं लक्षणं जागरितमिष्यते वेदान्तेषु। अवस्तु

एष एवेत्यात्मस्वभावो गृह्यते। परमतनिराकरणमुखेनात्मतत्त्व-मवधारितम्। अधुना स्वप्रक्रियवाऽवस्थात्रयोपन्यासमुखेनापि तदव-धारयितुमवस्थाद्वयमुपन्यस्यति। सवस्त्विति॥ वृत्तानुवादपूर्व्वकं प्रकरणशेषस्य तात्पर्यं दर्शयति। एवमिति॥ शिष्यसाध्यारोपदृष्टि-माश्रित्य जाग्रदादिपदार्थपरिशुद्धिपूर्व्वको बोधप्रकारः स्वप्रक्रिया तया तस्यैवात्मतत्त्वस्य प्रदर्शनपरो ग्रन्थशेष इत्यर्थः॥ तत्र जागरितमुदा-हरति। सवस्त्विति॥ यद्धि प्रातिभासिकं व्यवहारिकञ्च स्थूलमर्थ-जातमादित्यादिदेवतानुगृहीतैरिन्द्रियैरुपलभ्यते। तज्जागरितमि-त्यर्थः॥ द्वयमित्यस्यार्थमाह। शास्त्रादीति॥ तत्र श्लोके लोकप्रसिद्ध-मित्येतदुच्यते। लौकिकमिति॥ तद्व्याचष्टे। लोकादिति॥ न केवलं जागरितमिदं लोके प्रसिद्धम्। किन्तु वेदान्तेष्वपि परम्परया ज्ञानोपायत्वेन प्रसिद्धमित्याह। एवं लक्षणमिति॥ स्वप्नोपन्यासपर-मुत्तरार्द्धं योजयति॥ अवस्त्विति॥ बाह्येन्द्रियप्रयुक्तो व्यवहारः संवृ-

अवस्तु सोपलम्भञ्च द्वयं लौकिकमिष्यते ॥८७॥
अवस्त्वनुपलम्भञ्च लोकोत्तरमिति स्मृतम् ।

संवृतेरथभावात् । सोपलम्भं वस्तुवत् उपलम्भनमुपलम्भो-ऽसत्यपि वस्तुनि तेन सह वर्त्तत इति सोपलम्भञ्च । शुद्धं केवलं प्रतिविविक्तं जागरितात् स्थूलात् लौकिकं सर्व्व-प्राणिसाधारणत्वादिष्यते स्वप्न इत्यर्थः ॥८७॥

अवस्त्वनुपलम्भञ्च ग्राह्यग्रहणवर्जितमित्येतल्लोकोत्त-रम् । अत एव लोकातीतम् । ग्राह्यग्रहणविषयो हि लोकः तदभावात् सर्व्वप्रवृत्तिबीजं सुषुप्तमित्येतदेवं स्मृतं सोपायम्परमार्थतत्त्वं लौकिकम् । शुद्धं लौकिकं शुद्ध

तिशब्दार्थः सोऽपि स्थूलार्थवत्र स्वप्नं भवति । तथा च बाह्येषु करणेषूप-संहृतेषु जागरितवासनानुसारेण मनसस्तत्तदर्थाभासाकारावभासनं स्वप्नप्रवृत्तमित्यर्थः ॥ शुद्धमित्यस्य केवलमितिपर्य्यायं गृहीत्वा विव-क्षितमर्थमाह । प्रविविक्तमिति ॥ तस्यापि लोकप्रसिद्धत्वं लौकिकमि-त्यनेनोक्तं तद्विवृणोति । सर्व्वप्राणीति ॥८७॥

सम्प्रति सुषुप्तं दर्शयति । अवस्त्विति ॥ स्थूलं सूक्ष्मञ्च वस्तु विषयभूतं यत्र न विद्यते तत्तया इन्द्रियार्थसम्प्रयोगजन्यो वा स्थूला-र्थावगाही वासनात्मको वा यत्रोपलम्भो न सम्भवति तदशेषविज्ञानशून्यं सुषुप्तमिति विशिनष्टि । अनुपलम्भञ्चेति ॥ नन्विदं कारणात्मना बद्धे-रवस्थानम् । न च कारणं लोके प्रसिद्धम् ॥ कार्य्यस्यैवावस्थाद्वया-त्मकस्य तथात्वादित्यभिप्रेत्याह । लोकोत्तरमिति ॥ तस्य साक्षि-प्रसिद्धत्वं विवक्षित्वोक्तमित्याह । स्मृतमिति ॥ ज्ञानत्रयात्मकमेवावस्था-त्रयं तुरीयञ्च परमार्थतत्त्वं विद्वदनुभवसमधिगम्यमित्याह । ज्ञान-मिति ॥ श्लोकगतम्पदद्वयमनूद्य विवक्षितमर्थं कथयति । अवस्त्विति ॥

ज्ञानं ज्ञेयञ्च विज्ञेयं सदा बुद्धैः प्रकीर्त्तितम्॥ ८८॥
ज्ञाने च त्रिविधे ज्ञेये क्रमेण विदिते स्वयम्।

लौकिकं लोकोत्तरं क्रमेण येन ज्ञानेन [illegible] ज्ञानं ज्ञेयमेतान्येव त्रीणि। एतद्व्यतिरेकेण ज्ञयानुपपत्तेः। सर्व्वप्रावादुककल्पितवस्तुनोऽत्रैवान्तर्भावाद्विज्ञेयं परमार्थसत्यं तुर्य्याख्यमद्वयमजमात्मतत्त्वमित्यर्थः। सदा सर्व्वदैतल्लौकिकादिविज्ञेयान्तं बुद्धैः परमार्थदर्शिभिर्ब्रह्मविद्भिः प्रकीर्त्तितम्॥८८॥

ज्ञाने च लौकिकादिविषये। ज्ञेये च लौकिकादौ त्रिविधे च पूर्व्वं लौकिकं स्थूलम्। तदभावेन पश्चाच्छुद्धं

ग्राह्यग्रहणविभागवर्जितत्वादेव कुतो लोकातीतत्वमित्याशङ्क्याह। ग्राह्येति॥ सुषुप्तञ्चेदं लौकिकं कथं, तदवगम्यतामित्याशङ्क्याह। सर्व्वप्रवृत्तीति॥ अवस्थाद्वयबीजं सुषुप्तमित्येतत्प्रसिद्धं शास्त्रविदामित्याह। एवमिति॥ अवस्थात्रयमेवमुक्त्वा ज्ञानपदार्थं कथयति। सोपायमिति। ज्ञानमत्र मनोवृत्तिरूपं विवक्षितमवस्थात्रयातिरिक्तमपि परीक्षकपरिकल्पितं ज्ञेयं सम्भवतीत्याशङ्क्याह। सर्व्वेति॥ सर्व्वैरेव प्रावादुकैः शुष्कतर्कजल्पनशीलैः परिकल्पितस्य कार्य्यकारणादिरूपवस्तुनोऽवस्थात्रये नियमेनान्तर्भावाज्ज्ञेयान्तरं नास्तीत्यर्थः॥ ज्ञेयमेव विशेषेण ज्ञेयं विज्ञेयमुच्यते न तदपि नावस्थात्रयातिरिक्तमस्तीत्याशङ्क्याह। विज्ञेयमिति॥ उपायोपेयभूते यथोक्तेऽर्थे विदुषामभिमतमादर्शयति। सदेति॥८८॥

आत्मनि विज्ञाते सर्व्वमिदं विज्ञातम्भवतीति श्रुत्या यत्प्रतिज्ञातं तदुक्तवस्तुज्ञाने फलतीति कथयति। ज्ञाने चेति॥ ज्ञानज्ञेयवेदने विवक्षितं क्रममनुक्रामति। पूर्व्वमित्यादिना॥ यत्पुनरवस्थात्रया-

सर्वज्ञता हि सर्वत्र भवतीह महाधियः ॥८६॥
हेयज्ञेयाप्यपाक्यानि विज्ञेयान्यग्रयाणतः ।

---

लौकि[illegible]रथ्यभावात् [illegible]न लोकोत्तरमित्येव क्रमेण स्थानत्रया-भावेन प[illegible]र्थसत्ये तुर्य्येऽद्वयेऽजेऽभये विदिते स्वयमेवात्म-स्वरूपमेव सर्व्वज्ञता सर्व्वश्चासौ ज्ञश्च सर्व्वज्ञस्तद्भावः सर्व्वज्ञता इहास्मिंल्लोके भवति महाधियो महाबुद्धेः ॥ सर्व्वलोकातिशयवस्तुविषयबुद्धित्वादेवंविदः सर्व्वत्र सर्व्वदा भवति। सकृद्विदिते स्वरूपे व्यभिचाराभावादित्यर्थः । नहि परमार्थविदो ज्ञानोद्भवाभिभवौ स्तो यथाऽन्येषां प्रावादुकानाम् ॥८६॥

लौकिकादीनां क्रमेण ज्ञेयत्वेन निर्द्देशादस्तित्वाशङ्का

---

तीतं तुरीयन्तत्परिज्ञाने विवक्षितं क्रमं दर्शयति। स्थानेति॥ तुर्य्य-विदिते सतीति सम्बन्धः। तस्य स्थानत्रयात्मद्वैताभावोपलक्षितत्व-माह। अद्वय इति॥ जन्मादिसर्व्वविक्रियारहितत्वेन कौटस्थ्यं कथयति। अज इति॥ कार्य्यसम्बन्धस्तत्र नास्तीति वक्तुं कारणभूता-विद्यासम्बन्धाभावमभिदधाति। अभय इति॥ यथोक्ततत्त्वज्ञानस्य परिपूर्णब्रह्मरूपेणावस्थानं फलमाह। स्वयमेवेति॥ ज्ञानवतो यथोक्तं फलमर्चिरादिमार्गायत्तमिति शङ्कां वारयति। इहेति॥ उक्तज्ञान-वतो महाबुद्धित्वे हेतुमाह। सर्व्वलोकेति॥ ज्ञानवतो यथोक्तं ज्ञानं कदाचिद्भवेदपि कालान्तरेऽभिभूतमसत्कल्पमभविष्यतीत्याशङ्क्याह। एवंविद इति॥ श्रुत्याचार्य्यप्रसादाद्विदिते स्वरूपे स्वरूपस्फुरणस्य व्यभिचाराभावात्परिपूर्णज्ञप्तिरूपता विदुषो भवतीत्युक्तं स्फुटयति। न हीति॥८८॥

अवस्थात्रयस्य ज्ञेयत्वनिर्द्देशात्परमार्थतोऽस्तित्वमाशङ्क्य परि-

तेषामन्यत्र विज्ञेयादुपलम्भस्त्रिषु स्मृतः ॥६०॥
प्रकृत्याकाशवज्ज्ञेयाः सर्वे धर्म्मा [illegible] ।

परमार्थतो माभूदित्याह। हेयानि च [illegible] त्रीणि जागरितस्वप्नसुषुप्तान्यात्मन्यसत्त्वेन रज्ज्वां सर्पवद्धातव्यानीत्यर्थः। ज्ञेयमिह चतुष्कोटिवर्जितं परमार्थतत्त्वम्। आप्यान्याप्तव्यानि त्यक्तवाह्यैषणात्रयेण भिक्षुणा पाण्डित्यबाल्यमौनाख्यानि साधनानि। पाक्यानि रागद्वेषमोहादयो दोषाः कषायाख्यानि पक्तव्यानि। सर्व्वाण्येतानि हेयज्ञेयाप्यपाक्यानि विज्ञेयानि भिक्षुणा उपायत्वेनेत्यर्थः। अग्रयाणतः प्रथमतस्तेषां हेयादीनामन्यत्र विज्ञेयात्परमार्थसत्यं विज्ञेयं ब्रह्मैकं वर्जयित्वा। उपलम्भनमुपलम्भोऽविद्याकल्पनामात्रम्। हेयाप्यपाक्येषु त्रिष्वपि स्मृतो ब्रह्मविद्भिर्न परमार्थसत्यतस्त्रयाणामित्यर्थः ॥६०॥

परमार्थतस्तु प्रकृत्या स्वभावत आकाशवदाकाश-

हरति। हेयेति॥ शङ्कोत्तरत्वेन श्लोकमवतार्य्य हेयशब्दार्थं व्याचष्टे। लौकिकादीनामिति॥ तान्येव त्रीणि विभजते। जागरितेति॥ पाण्डित्यं वेदान्ततात्पर्य्याभिज्ञत्वमद्वितीयवस्तुविचारचातुर्य्यपरिनिष्पन्नं श्रवणम्। बाल्यं दम्भदर्पाहङ्कारादिराहित्यम्। युक्तितः श्रुतार्थानुसन्धानकुशलत्वं मौनं मुनेः कर्म्म ज्ञानाभ्यासलक्षणं निदिध्यासनशब्दितम्। तान्येतान्याप्तव्यानि॥ यद्यपि ज्ञेयस्य विज्ञेयत्वं युक्तं तथापि कथं हेयादीनां विज्ञेयत्वमित्याशङ्क्याह। उपायत्वेनेति॥ तदेव प्रकटयितुं प्रथमत इत्युक्तम्॥ उत्तरार्द्धं व्याचष्टे। तेषामिति॥ हेयादीनां रज्जुसर्पवदविद्याकल्पितत्वान्नास्ति परमार्थत्वशङ्केत्यर्थः ॥६०॥

यदुक्तं ज्ञेयं चतुष्कोटिवर्जितं परमार्थतत्त्वमिति तदिदानीं

**विद्यते नहि नानात्वं तेषां क्वच न किञ्चन॥९१॥**
**आदिबुद्धाः प्रकृत्यैव सर्व्वे धर्म्माः सुनिश्चिताः।**

तुल्यैरथभावात् जनसर्व्वगतत्वे सर्व्वे धर्म्मा आत्मनो ज्ञेया मुमुक्षुभिरनादयो नित्याः। बहुवचनकृतभेदाशङ्कां निराकुर्व्वन्नाह। क्वचन किञ्चन। किञ्चिदणुमात्रमपि तेषां न विद्यते नानात्वमिति॥९१॥

ज्ञेयतापि धर्म्माणां संवृत्यैव न परमार्थत इत्याह। आदीति। यस्मादादौ बुद्धा आदिबुद्धाः प्रकृत्यैव स्वभावत एव। यथा नित्यप्रकाशस्वरूपः सवितैवं नित्यबोधस्वरूपा इत्यर्थः। सर्व्वे धर्म्माः सर्व्व आत्मानः। न च तेषां निश्चयः कर्त्तव्योऽनित्यनिश्चितस्वरूपा इत्यर्थः। न सन्दिह्यमानस्वरूपा एवं नैवञ्चेति यस्य मुमुक्षोरेवं यथोक्तप्रकारेण सर्व्वदा बोधनिश्चयनिरपेक्षता आत्मार्थं परार्थं वा।

स्फुटयति। प्रकृत्येति॥ बहुवचनप्रयोगप्राप्तं दोषमुपन्यस्यादिशति। विद्यत इति॥ कल्पितभेदनिबन्धनम्बहुवचनमित्यर्थः। क्व च नेति देशकालावस्थापेक्षया। अणुमात्रमपीति कार्य्यकारणभावस्यांशांशिभावस्य चोपादानम्॥९१॥

ज्ञेयशब्दप्रयोगात् मुख्यमेव ज्ञेयत्वं प्राप्तं प्रत्युदस्यति। आदिबुद्धा इति॥ यथोक्तरीत्या समुत्पन्नस्य ज्ञानस्य फलमाह। यस्येति॥ प्रथमपादस्य तात्पर्य्यमाह। ज्ञेयतापीति॥ उक्तमर्थं दृष्टान्तेन स्फुटयति। यथेति॥ पदान्तरस्यार्थं कथयति। न चेति॥ निश्चितस्वरूपत्वमेव व्यतिरेकद्वारा स्फोरयति। नेत्यादिना॥ न खल्वात्मा स्वसत्तायामेवं नैवमिति सन्दिह्यमानस्वरूपो भवितुमलम्। तस्य स्फुरणाव्यभिचारात्तद्रूपस्य प्रागेव साधितत्वादित्यर्थः॥ द्वितीयार्द्धं व्याकरोति।

यस्यैवम्भवति चान्तिः सोऽमृतत्वाय कल्पते॥८२॥
आदि शान्ता ह्यनुत्पन्नाः प्रकृत्यैव सुनिर्वृताः ।
सर्व्वधर्म्माः समाभिन्ना अजंसाम्यं [illegible] ॥८३॥

---

यथा सविता नित्यं प्रकाशान्तरनिरपेक्षः स्वयं परार्थ-श्चेत्येवम्भवति। चान्तिर्बोधकर्त्तव्यतानिरपेक्षता सर्वदा स्वात्मनि सोऽमृतत्वायामृतभावाय कल्पते। सोऽभाय स-मर्थो भवतीत्यर्थः ॥८२॥

तथा नापि शान्तिकर्त्तव्यताऽऽत्मनीत्याह। यस्मादादि शान्ता नित्यमेव शान्ता अनुत्पन्ना अजाश्च प्रकृत्यैव सुनि-र्वृताः सुष्ठु परस्वभावा नित्यमुक्तस्वभावा इत्यर्थः। सर्वे धर्म्माः समाश्चाभिन्नाश्च समाभिन्ना अजं साम्यं विशारदं विशुद्धमात्मतत्त्वं यस्मात्तस्माच्छान्तिर्मोक्षो वा नास्ति कर्त्तव्य इत्यर्थः। न हि नित्यैकस्वभावस्य कृतं किञ्चिदेव स्यात् ॥८३॥

---

यस्येत्यादिना॥ आत्मस्वरूपस्य स्वरूपत्वं यथोक्तम्प्रकारः। बो धाख्यो निश्चयो बोधनिश्चयस्तन्निरपेक्षत्वं स्वार्थं परार्थं वा यस्य भवति सोऽमृतत्वाय कल्पत इति सम्बन्धः॥ तदेव दृष्टान्तेन बोध-यति। यथेत्यादिना॥ इतिशब्दो यथेत्येतेन सम्बध्यते सोऽमृतत्वाये-त्यादिवचनात् ॥८२॥

आगन्तुकममृतत्वं प्रत्युदस्यति। आदि शान्ता इति॥ श्लोकस्य तात्पर्य्यमुत्तरार्धेन निर्दिशति। तथा नापीत्यादिना॥ उक्तमेवार्थं चतुर्थपादेन सङ्क्षिप्य दर्शयति। अजमिति॥ श्लोकार्धमुपसंहरति। विशुद्धमिति॥ उक्तरूपतानङ्गीकारे मोक्षस्यापुरुषार्थता स्यादित्याह।

वैशारद्यन्तु वै नास्ति भेदे विचरतां सदा ।
भेदनिम्नाः पृथग्वादास्तस्मात्ते कृपणाः स्मृताः ॥ ९४ ॥
अजे [illegible] केचिद्भविष्यन्ति सुनिश्चिताः ।

[illegible]रपृथग्भावात् [illegible]ेन
ये [illegible] परमार्थतत्त्वं प्रतिपन्नास्ते एवाकृपणा लोके कृपणास्त्वन्ये इत्याह । यस्माद्भेदनिम्ना भेदानुयायिनः संसारानुगा इत्यर्थः । के । पृथग्वादाः पृथक् नाना वस्त्विति एवं वदनं येषां ते पृथग्वादा द्वैतिन इत्यर्थः । तस्मात्ते कृपणाः क्षुद्राः स्मृता यस्माद्वैशारद्यं विशुद्धिर्नास्ति तेषाम्भेदे विचरतां द्वैतमार्गेऽविद्याकल्पिते सर्व्वदा वर्त्तमानानामित्यर्थः । अतो युक्तमेव तेषां कार्पण्यमित्यभिप्रायः ॥ ९ ॥

यदिदं परमार्थतत्त्वममहात्मभिरपण्डितैर्वेदान्तबहिष्ठैः क्षुद्रैरल्पज्ञैरनवगाह्यमित्याह । अजे साम्ये पर-

---

न कीति ॥ संसारदुःखोपशमनं सुखजन्म यदि क्रियते तदा कृतकस्यानित्यत्वमवश्यम्भावीत्यर्थः ॥ ९३ ॥

इदानीं मुमुक्षुप्ररोचनार्थमविद्वन्निन्दां दर्शयति । वैशारद्यन्विति ॥ श्लोकस्य तात्पर्य्यं दर्शयति । यथोक्तमिति ॥ उत्तरार्द्धमादौ योजयति । यस्मादिति ॥ तस्मादित्युत्तरेणास्य सम्बन्धः ॥ प्रथमार्द्धमुक्तेऽर्थे हेतुत्वेन व्याचष्टे । यस्मादित्यादिना ॥ समनन्तरोक्तस्य यस्मादित्यस्यापेक्षितं पूरयति । अत इति ॥ ९४ ॥

एवमविद्वन्निन्दामुपदर्श्य विद्वत्प्रशंसां प्रसारयति । अज इति ॥ कूटस्थे वस्तुनि निर्व्विशेषे येषामसम्भावनाविपरीतभावनाविरहि निर्द्धारणारूपं विज्ञानसम्भावनोपनीतमस्ति ते हि व्यवहारभूमौ महति निरतिशये तत्त्वे परिज्ञानतत्त्वान्महानुभावा भवन्तीत्यर्थः । ननु तत्त्व-

ते हि लोके महात्मानास्तच्च लोको न गाहते॥ ९५ ॥

मार्थतत्त्वे एवमेवेति ये केचित् स्त्री[illegible] [illegible]वता भविष्यन्ति चेत्त एव हि लोके महात्मानः। [illegible]तश्राय-तत्त्वविषयकज्ञाना इत्यर्थः। तच्च तेषां वर्त्म तेषां विदितं परमार्थतत्त्वं सामान्यबुद्धिरन्यो लोको न गाहते नावतरति न विषयीकरोतीत्यर्थः॥ सर्व्वभूतात्मभूतस्य सर्व्वभूतहितस्य च। देवा मार्गेऽपि मुह्यन्ति ह्यपदस्य पदैषिणः॥ शकुनीनामिवाकाशे गतिर्नैवोपलभ्य इत्यादिस्मरणात् ॥९५॥

विषयज्ञानस्य सर्व्वलोके साधारणत्वात्तत्त्वज्ञानतां किमिति प्रशंसा प्रस्तूयते तत्राह। तच्चेति॥ श्लोकस्य तात्पर्य्यमाह। यदिदमिति॥ यदित्युपक्रमात्तदमहात्मभिरनवगाह्यमिति योजनीयम्। अमहात्मत्वं क्षुद्रहृदयत्वम्। तत्र हेतुरपण्डितैरिति। अपाण्डित्यं विवेकरहितत्वम्। तत्र हेतुर्व्वेदान्तेत्यादिना सूच्यते। तेषां पौर्व्वापर्य्येण पर्य्यालोचनापरिचयपराङ्मुखैरित्यर्थः॥ विचारचातुर्य्याभावादेव पदार्थवाक्यार्थविभागावगमशून्यत्वमाह। अल्पप्रज्ञैरिति॥ तर्हि पारमार्थिके तत्त्वे केषामेव मनीषा समुन्मिषेदित्याशङ्क्य येषां केषाञ्चिदेव तन्निष्ठानामित्याह। ये केचिदिति॥ स्त्र्यादीनामुपनिषद्द्वाराज्ज्ञानाधिकाराभावेऽपि द्वारान्तरप्रयुक्तस्तदधिकारः सम्भवतीत्यभिप्रेत्यापीत्युक्तम्॥ तत्त्वज्ञानस्य दुर्लभत्वमभ्युपेत्य चेदुक्तं चतुर्थपादं व्याचष्टे। तच्चेति॥ ज्ञानवतां विज्ञातं परमार्थतत्त्वमन्येषामनवगाह्यमित्यत्र प्रमाणमाह। सर्व्वभूतेति॥ सर्व्वेषाम्भूतानां ब्रह्मादीनां स्तम्बपर्य्यन्तानामात्मा परम्ब्रह्म तद्भूतस्य विदुषः सर्व्वात्मभूतस्य सर्व्वेषु भूतेषु निरुपचरितस्वरूपत्वादेव परमहितस्य परमप्रेमास्पदत्वादेव परम-

अजेष्वजमसंक्रान्तं धर्म्मेषु ज्ञानमिष्यते ।
यतो [illegible] क्रान्तमसङ्गं तेन कीर्त्तितम् ॥९६॥
अणु [illegible] प्यभावात् [illegible] येन [illegible] जायमानेऽविपश्चितः ।

कथं महाज्ञानत्वमित्याह । अजेष्वनुत्पन्नेष्वचलेषु धर्म्मेष्वात्मस्वजमचलञ्च ज्ञानमिष्यते सवितरीवौष्ण्यं प्रकाशश्च यतस्तस्मादसंक्रान्तमर्थान्तरे ज्ञानमजमिष्यते । यस्मान्न क्रमतेऽर्थान्तरे ज्ञानन्तेन कारणेनासङ्गं तत् कीर्त्तितमाकाशकल्पमित्युक्तम् ॥९६॥

इतोऽन्येषां वादिनामणुमात्रेऽल्पेऽपि वैधर्म्म्ये वस्तुनि

सुखात्मकस्य प्राप्य पुरुषार्थविरहिणो मार्गे देशं विद्यावन्तोऽपि पदमन्वेषमाणा विविधं मोहमुपलभन्तीत्यर्थः । महात्मनो ज्ञानवतो गन्तव्यपदरहितस्य परिपूर्णस्य गतिरवगन्तुमशक्येति निदर्शनवशेन विशदयति । शकुनीनामिति ॥९५॥

अजं साम्यमित्युक्तं प्रमेयम् । तद्विषयनिश्चयवान् प्रमाता । प्रमाणं तथाविधनिश्चयज्ञानमिति । वस्तुपरिच्छेदे कथं महाज्ञानत्वमित्याशङ्क्याह । अजेष्विति ॥ अजा धर्म्मा चित्प्रतिबिम्बा जीवा विवक्ष्यन्ते । तेष्वजं ज्ञानं कूटस्थदृष्टिरूपं बिम्बकल्पं ब्रह्माचलमात्मभूतमभ्युपगम्यते । तथा च मानमेयादिभावस्य कल्पितत्वेऽपि वस्तुतो वस्तुपरिच्छेदाभावादुपपन्नं तज्ज्ञानवतां महाज्ञानत्वमित्यर्थः । किञ्चास्मन्मते ज्ञानस्य पदसङ्गत्वमङ्गीकृतं तदपि विषयभावादेव सिद्ध्यति । ततश्च मुक्तौ निर्व्विषयं मन इति यदुच्यते तदप्यविरुद्धमित्याह । यतो नेति ॥ आकाङ्क्षापूर्व्वकं पूर्व्वार्द्धं योजयति । कथमित्यादिना ॥ उत्तरार्द्धं व्याचष्टे । यस्मान्नेति ॥ नित्यविज्ञप्तिरूपस्यात्मनोऽसङ्गत्वं प्रागपि सूचितमित्याह । आकाशेति ॥९६॥

कूटस्थं ब्रह्मैव तत्त्वमिति स्वमते ज्ञानमसङ्गं सिद्ध्यतीत्युक्तं मता-

**असङ्गता सदा नास्ति किमुतावरणच्युतिः ॥९७॥**

**अलब्धावरणाः सर्वे धर्म्माः [illegible] ।**

---

वहिरन्तर्वा जायमाने उत्पद्यमानेऽ[illegible]किनो ऽसङ्गताऽसङ्गत्वं सदा नास्ति किमु वक्तव्यमावरणच्युतिर्बन्धनाशो नास्तीति ॥९७॥

तेषामावरणच्युतिर्नास्तीति ब्रुवतां स्वसिद्धान्तेऽभ्युपगतं तर्हि धर्म्माणामावरणं नेत्युच्यते । अलब्धावरणाः । अलब्धमप्राप्तमावरणमविद्यादिबन्धनं येषां ते धर्म्मा अलब्धावरणा बन्धनरहिता इत्यर्थः । प्रकृतिनिर्म्मलाः स्वभावशुद्धा आदौ बुद्धास्तथा मुक्ता यस्मान्नित्यशुद्धबुद्धमुक्तस्वभावाः । यद्येवं कथं तर्हि बुध्यन्त इत्युच्यते । नायकाः स्वामिनः समर्था बोद्धुं बोधशक्तिमत्स्वभावा इत्यर्थः ।

---

न्तरे पुनः स्वविषयत्वाज्ज्ञानस्यासङ्गत्वमसङ्गतं प्रसज्येतेत्याह । अणुमात्रेऽपीति । अविद्वद्दृष्ट्या कस्यचिदपि पदार्थस्य जन्माङ्गीकारे ज्ञानस्य तदनुषक्तित्वेनासङ्गत्वायोगे बन्धध्वंसलक्षणं प्रयोजनं दूरापास्तम्भवतीत्याह । किमुतेति ॥ श्लोकाक्षराणि व्याकरोति । इत इति ॥९७॥

विज्ञानद्वैतवादी पञ्चम्या परामृश्यते । न चेदावरणच्युतिरिष्यते तर्हि स्वीकृतमावरणमित्याशङ्क्याह । अलब्धेति ॥ बोद्धृत्वं तर्हि कथमित्याशङ्क्य बोधनशक्तिमत्त्वादित्याह । बुध्यन्त इति ॥ शङ्कोत्तरत्वेन श्लोकमवतारयति । तेषामित्यादिना ॥ अविद्वद्दृष्ट्यैवाविद्यावरणं सिध्यति ॥ न तत्त्वदृष्ट्येत्यभिप्रेत्य व्याचष्टे ॥ अलब्धेति ॥ उक्तेऽर्थे हेतुकथनार्थं विशेषणत्रयमित्याह । यस्मादिति ॥ तस्मात् बन्धनरहिता इति पूर्व्वेण सम्बन्धः । आत्मनो यथोक्तस्वभावत्वे बोधत्वं न सिध्यती-

आदौबुद्धास्तथा मुक्ता बुध्यन्त इति नायकाः॥ ९८ ॥
क्रमते न हि बुद्धस्य ज्ञानं धर्म्मेषु तापिनः ।

यथा [illegible]ध्यभावात् [illegible]पेऽपि सविता प्रकाशत इत्युच्यते यथा वा [illegible]ष्टत्तिगतयोऽपि नित्यमेव शैलास्तिष्ठन्तीत्युच्यते तद्वत् ॥९८॥

यस्मान्न हि क्रमते बुद्धस्य परमार्थदर्शिनो ज्ञानं विषयान्तरेषु धर्म्मेषु धर्म्मसंस्थं सवितरीव प्रभा । तापिनः तापोऽस्यास्तीति तापी तस्य सन्तापवतो निरन्तरस्याकाशकल्पस्येत्यर्थः । पूजावतो वा प्रज्ञावतो वा सर्वे धर्म्मा आत्मनोऽपि तथा ज्ञानवद्देवाकाशकल्पत्वान्न क्रमन्ते कचिदप्यर्थान्तर इत्यर्थः । यदादावुपन्यस्तं ज्ञानेनाकाशकल्पेनेत्यादि तदिदमाकाशकल्पस्य तापिनो बुद्धस्य तदनन्यत्वादाकाशकल्पं ज्ञानं न क्रमते क्वचिदप्यर्थान्तरे॥ तथा

त्याचिपति । यद्वेवमिति ॥ पदान्तरेणोत्तरमाह । उच्यत इति ॥ मुख्यावेव क्रियाकर्त्तारौ प्रकृतिप्रत्ययाभ्यामभिधेयावित्याशङ्क्य नियममुदाहरणाभ्यां निरस्यति । यथेत्यादिना ॥९८॥

किमिति मुख्ये बोद्धृत्व सम्भाविते तदेव नेष्टमित्याशङ्क्य ज्ञानस्य विद्वद्दृष्ट्या विषयसम्बन्धासम्भवादित्याह । क्रमत इति ॥ किञ्च जीवानां ब्रह्मात्मना विभुत्वादाकाशवत् क्रियासमवाया योगान्न मुख्यं बोद्धृत्वं सेद्धुमलमित्याह । सर्व्व इति ॥ ज्ञानमात्रं पारमार्थिकं तत्रैव ज्ञातृज्ञेयादिकल्पितमिति सौगतमतमेव भवतापि संगृहीतमित्याशङ्क्याह । ज्ञानमिति ॥ तत्र पूर्व्वार्द्धाक्षराणि व्याकरोति । यस्मादिति ॥ यद्धि परमार्थदर्शिनो ज्ञानं तन्न विषयान्तरेषु क्रमते किन्तु सवितरि प्रकाशवदात्मन्येव प्रतिष्ठितं यस्मादिष्यते तस्मान्नास्मिन् मुख्यत्वं सेद्धुमर्हती-

**सर्व्वे धर्म्मास्तथा ज्ञानं नैतद्बुद्धेन भाषितम्॥९९॥**
**दुर्द्दर्शमतिगम्भीरमजं साम्यं [illegible]**

धर्म्मा इति आकाशमिवाचलमविक्रिय [illegible] त्यम-द्वितीयमसङ्गमदृश्यमग्राह्यमशनायाद्यतीतं ब्रह्मात्मतत्त्वम्। न हि द्रष्टुर्द्दृष्टेर्विपरिलोपो विद्यत इति श्रुतेः। ज्ञानज्ञेयज्ञातृभेदरहितं परमार्थतत्त्वमद्वयमेतन्न बुद्धेन भाषितम्। यद्यपि वाह्यार्थनिराकरणं ज्ञानमात्रकल्पना चाद्वयवस्तुसामीप्यमुक्तम्। इदन्तु परमार्थतत्त्वमद्वैतं वेदान्तेष्वेव विज्ञेयमित्यर्थः॥९९॥

शास्त्रसमाप्तौ परमार्थतत्त्वस्तुत्यर्थं नमस्कार उच्यते।

त्यर्थः। परमार्थदर्शिनो विशेषणं तायिन इति॥ तद्व्याचष्टे। तायो-ऽस्येत्यादिना॥ आत्मनो मुख्यस्य बोद्धृत्वस्याभावे हेत्वन्तरं सर्व्वे धर्म्मास्तथेति तद्विभजते। सर्व्व इत्यादिना॥ प्रकरणादावुक्तमेव किमर्थं पुनरिहोच्यते तत्राह। यदादाविति॥ तदिदमिहोपसंहृतमिति शेषः॥ क्रमते न हीत्यादेरक्षरार्थमुपसंहरति। आकाशकल्पस्येति॥ सर्व्वे धर्म्मास्तथेत्यस्यार्थं निगमयति। तथेति॥ धर्म्मा न क्रमन्ते क्वचिदपीति शेषः। तथा च नात्मनि मुख्यं बोद्धृत्वं किन्त्वौपकारिकमिति प्रकृतमुपसंहर्त्तुमितिशब्दः॥ पूर्व्वार्द्धस्य तात्पर्य्यमाह। आकाशमिति॥ ज्ञानमित्यादि व्याचष्टे॥ ज्ञानेति॥ सकलभेदविकलं परिपूर्णमनादिनिधनं ज्ञप्तिमात्रमुपनिषदेकसमधिगम्यं तत्त्वमिह प्रतिपाद्यते। मतान्तरे तु नैवमिति कुतो मतसाङ्कर्य्याशङ्कावकाशमासादयेदित्यर्थः॥९९॥

प्रकरणचतुष्टयविशिष्टस्य शास्त्रस्यादाविवान्तेऽपि परदेवतातत्त्वमनुस्मरन् तन्नमस्काररूपं मङ्गलाचरणं सम्पादयति। दुर्द्दर्शमिति॥

बुद्धा पदमनानात्वं नमस्कुर्मो यथा बलम् ॥१००॥
इति [illegible]र्य्यकृता माण्डुक्योपनिषत्का-
[illegible]॥ ॐ तत् सत् ॐ ॥

दुर्दर्शं दुःखेन दर्शनमस्येति दुर्दर्शम् । अस्तिनास्तीति चतु-
ष्कोटिवर्जितत्वात् दुर्विज्ञेयमित्यर्थः । अत एवातिगम्भीरं
दुःप्रवेशं महासमुद्रवदकृतप्रज्ञैः । अजं साम्यं विशारदम् ।
दृष्टक् पदमनानात्वं नानात्ववर्जितं बुद्धा अवगम्य तद्भूताः

दुर्विज्ञेयत्वे प्रत्यक्षादिप्रमाणानधिगम्यत्वं हेतुं विवक्षित्वा विशिनष्टि ।
अतिगम्भीरमिति ॥ प्रत्यक्षादिभिरनवगाह्यत्वे कूटस्थत्वं निर्विशेषत्वं
सर्वसम्बन्धविधुरत्वञ्चेति हेतुत्रयमभिप्रेत्याह । अजमित्यादिना ॥
विशेषणत्रयं तर्हि कुतश्चिदनवगतं तन्नास्त्येवेति निश्चेतुं युक्तम् । प्रमा-
णाधीनत्वात् प्रमेयसिद्धेरित्याशङ्क्योपनिषद्भिरतद्धर्म्माध्यासापाकरण-
द्वारेणावगम्यमानत्वान्मैवमित्याह । पदमिति ॥ तत्र तर्हि सकल-
विभागविकले कुतोनमस्कारक्रिया सोक्रियामर्हतीत्याशङ्क्याह । अना-
नात्वमिति ॥ यद्यपि वस्तुतस्तस्मिन्नानात्वं नावकल्पते तथापि यथा
सामर्थ्यं मायाबलमवलम्ब्य काल्पनिकं नानात्वमनुसृत्य नमस्कारक्रिया
प्रचयादिप्रयोजनवती प्रामाणिकैरभिप्रेतेत्यर्थः ॥ श्लोकस्य तात्पर्य-
माह । शास्त्रेति ॥ यदि परमार्थतत्त्वं शास्त्रस्यादावितान्तेऽपि नम-
स्क्रियते तदा तस्याद्यन्तमध्येष्वनुसन्धेयतया श्रुतिः सिध्यति । तेन
तदर्थमादावितावसानेऽपि प्रकटीभावस्तद्विषयश्लोकेनोपदिश्यते । तथा
च प्रतिपाद्यस्य ब्रह्मणो महामहिमत्वं समधिगतमित्यर्थः । दुर्दर्श-
त्वमुक्तं व्यनक्ति । अस्तीति ॥ सर्वेषामेव यथोक्ते परमार्थतत्त्वे प्रवेशा-
नुपपत्तिमाशङ्क्य सम्प्रदायरहितानां तथा त्वेऽपि तद्गतां मैवमित्याह ।
व्यक्तेति ॥ कौटस्थ्यादिसिद्ध्यर्थं व्याख्यातमेव पदत्रयमनुवदति । अज-

न्तो नमस्कुर्म्मस्तस्मै पदाय। अव्यवहार्य्यमपि व्यवहार-
गोचरमापाद्य यथा बलं यथा शक्ती

अजमपि जनियोगं प्रापदैश्वर्य्ययो　　　　　ते-
मचलमपदेकं त्वनेकम्। विविधविषयध　　　　　च-
णानां प्रणतभयविहन्तृ ब्रह्म यत्तन्नतोऽस्मि॥१॥

मिति॥ उक्तं वेदान्तैकगम्यं तत्त्वं द्वैताभावोपलक्षितमित्याह। ईद-
गिति॥ यथोक्तं वस्तु ज्ञात्वा ज्ञानसामर्थ्यात् ब्रह्मीभूतश्चेदाचार्य्यस्तर्हि
कथं तस्मै नमस्कर्त्तुं प्रवर्त्तते॥ न हि परिपूर्णं वस्तु वस्तुतो व्यव-
हारगोचरतामाचरतीत्याशङ्क्याह। अव्यवहार्य्येति॥ परमार्थतो
व्यवहारगोचरत्वेऽपि. परमार्थतत्त्वस्य मायाशक्तिमनुसृत्य व्यवहार-
गोचरतामपरिकल्प्य नमस्कारक्रिया तस्मिन् प्रयोजनवशादाश्रिते-
त्यर्थः॥१००॥

इदानीं भाष्यकारोऽपि भाष्यपरिसमाप्तौ शास्त्रप्रतिपादितं पर-
देवतातत्त्वमनुसृत्य तन्नमस्काररूपं मङ्गलाचरणमाचरति। अजम-
पीति॥ यत् अशेषोपनिषत्प्रसिद्धं सर्वथा परिच्छेदरहितं तद्-
हम्प्रत्यग्भूतं नमस्ये तद्विषयं प्रकटीभावं करोमीति सम्बन्धः॥ प्रणाम-
प्रयोजनमाह। प्रणतेति॥ ये हि प्रणता ब्रह्मणि प्रकटीभूतास्तन्निष्ठा-
स्तिष्ठन्ति तेषां यदविद्या तत्कार्य्यात्मकभयं तदाचार्योपदेशजनितबुद्धि-
वृत्तिफलकारूढं ब्रह्मैव हन्ति। न खलु जडाद्वृत्ति वस्तुसामर्थ्य-
मन्तरेणाज्ञानं स्वकार्य्यमपनेतुमलं। बुद्धीद्धो बोधो बोधेद्धा
बुद्धिरुक्तं फलमादधातीत्यर्थः॥ तस्यैव ब्रह्मणः सम्प्रति तटस्थ-
लक्षणं विवक्षति। अजमित्यादिना॥ यद्यपि जन्मादिसर्वविक्रिया-
शून्यं वस्तुतो ब्रह्म कूटस्थमास्थीयते तथापि तदैश्वर्येण तदीय-
शक्त्यात्मके नानिर्वाच्याज्ञानवैभवेन योगादाकाशादिकार्य्यात्मना जन्म-
सम्बन्धम्प्राप्य जगतो निदानमिति व्यपदेशभाग्भवति तथा च
श्रुतिसूत्रयोर्ब्रह्मणो जगत्कारणत्वं प्रसिद्धमित्यर्थः॥ यद्यपि चेदं
ब्रह्म कूटस्थतया विभुतया च गतिवर्जितमवतिष्ठति तथापि यथो-

ज्ञानवैशाखवेधक्षुभितजलनिधेर्वेदनाम्नोऽन्तरस्थं भूतान्यालोक्य मग्नान्यविरतजननग्राहघोरे समुद्रे । कारुण्यादुद्दधारामृतमिदममरैर्दुर्लभं भूतहेतोर्यस्तं पूज्याभिपूज्यं परमगुरुममुं पादपातैर्नतोऽस्मि ॥ २॥

---

ब्रह्मज्ञानमाहात्म्यात् कार्य्यब्रह्मतामप्राप्य गतिमन्तो गन्तव्यतां बादर्य्यधिकरणन्यायेन प्रतिपद्यते तदाह । अगति चेति ॥ यद्यपि चेदं ब्रह्म वस्तुतो निरस्तसमस्तनानात्वमेकरसमद्वितीयमुपनिषद्भिरभ्युपगम्यते तथापि जीवो जगदीश्वरश्चेत्येतद्यदनाद्यनिर्व्वाच्याविद्यावशादनेकमिव प्रतिभातीत्याह । एकमिति ॥ केषां दृष्ट्या पुनरनेकत्वं ब्रह्मणोऽवगम्यते तदाह । विविधेति ॥ विविधास्ते विषयधर्म्माश्च तद्ग्राहितया मुग्धं विपर्य्यस्तं विवेकविकलमीक्षणं येषां तेषां दृष्ट्या ब्रह्मणोऽनेकत्वधीर्न तु तत्त्वतः । शान्तदृष्ट्या तु तस्मिन्नेकत्वमेव प्रामाणिकमित्यर्थः ॥ १ ॥

सम्प्रति ग्रन्थप्रणयनप्रयोजनप्रदर्शनपूर्व्वकं परमगुरून् आगमशास्त्रस्य व्याख्यातस्य प्रणेतृत्वेन व्यवस्थितान् प्रणमति । प्रज्ञेति ॥ यो हि कारुण्यादिदं ज्ञानाख्यमस्तं भूतहेतोस्तदुपकारार्थमुद्दधार तं परमगुरुं नतोऽस्मीति सम्बन्धः । अमुमिति तस्य पुरो देशे सन्निहितत्वेनापरोक्षत्वं सूचितम् ॥ परमगुरुत्वं पूज्यानामपि गुरुणामतिशयेन पूज्यत्वादाचार्यस्य समधिगतमित्याह । पूज्येति ॥ नमस्कारप्रक्रियाम्प्रकटयति । पादपातैरिति ॥ पादौ तदीयौ पादौ तयोः स्वकीयस्योत्तमाङ्गस्य पाताः भूयोभूयो नमीभावास्तैरिति यावत् ॥ आचार्य्यो ज्ञानाख्यमस्तं कथं भूतमुद्धृतवानित्यपेक्षायामुक्तम् । अन्तरस्थमिति ॥ कस्यान्तरस्थमिति विवक्षायामाह । वेदेति ॥ कथमित्यत्राह । प्रज्ञेति ॥ मेधासहिता प्रज्ञैव वैशाखः मन्थानदण्डस्तस्य वेधो वेधनं प्रक्षेपणं तेन क्षुभितो विलोडितो जलनिधिर्वेदनामा तस्याऽन्तरेऽभ्यन्तरे स्थितमिदमस्तमिति यावत् ॥ उक्तस्य ज्ञानामृतस्य प्रसिद्धादमृतादवान्तरवैषम्यमादर्शयति । अमरैरिति ॥ यद्धि भगवता नारायणेन क्षीरसागरान्तरावस्थितमस्तं समुद्धृतं तदेव कथञ्चिदमरा लेभिरे इदन्तु तैरनायास-

यत्प्रज्ञालोकभासा प्रतिहतिमगमत् [illegible] कारो मज्जोन्मज्ज घोरे ह्यमकृदुपज [illegible] से। यत्पादावाश्रितानां श्रुतिशमविनय [illegible] तत्पादौ पावनीयौ भवभयविनुदौ सर्वभावैर्नमस्ये॥ ३॥

---

लभ्यं न भवति। ज्ञानसाम्यी सम्यन्नैव लभ्यत्वादित्यर्थः। यदि कारुण्यादिदमन्ततमाचार्य्येण वेदोदधेरुद्धृतं कथं तर्हि कारुण्यं तस्य प्रादुरभूदित्याशङ्क्याह। भूतानीति॥ योऽयं समुद्रवत् दुरुत्तारः संसारस्तस्मिन्नविरतमनवरतं सन्ततमेव यानि जननानि विग्रहसंदग्रहणानि तान्येव ग्रहा जलचरास्तैर्घोरे क्रूरे भयङ्करे मग्नानि मग्नकल्पानि परवशानि भूतान्युलभ्य कारुण्यमाचार्य्यस्य प्रादुरासीत्। ततस्त्वदन्तमुद्धृत्य भूतेभ्यो न्वा तानि रक्षितवानित्यर्थः॥ २॥

अथाधुना स्वगुरोर्विद्याप्राप्तावन्तरङ्गत्वमङ्गीकृत्य तदीयपादसरोरुहयुगलं प्रणमति। यत् प्रज्ञेति॥ तेषामस्मद्गुरुचरणानां पादौ सर्वभावैर्वाङ्मनोदेहात्मप्रकटीभावैर्नमस्ये नम्रीभवामीति सम्बन्धः। [illegible] च जगतः सर्वस्य पावनीयौ पवित्रतया पवित्रत्वसापादयितुमर्हौ नान्ते तौ च स्वसर्व्वेषां सर्व्वेषां भवः संसारस्तत्प्रयुक्तं भयं स्वकारणेन सहापनुद्य पुरुषपरिश्रमाप्तिं कुर्व्वन् एतानेव गुरून् विशिनष्टि। यत्प्रज्ञेति॥ मे मम त्वमन्तःकरणं तस्मिन् मोहो व्याकुलताहेतुरविवेकस्तस्य कारणं यदयज्ञानं तदेषां प्रज्ञैवालोकस्तस्य भा दीप्तिस्तया प्रतिहतिं विनाशमगत् गतवत् तत्पादाविति सम्बन्धः। न केवलमज्ञानमेवाचार्य्यप्रसादपगच्छन्तच्छीभवति किन्तु तत्कार्य्यमनर्थजातमपि कारणनिवृत्तौ [illegible]तिमत्वभानमाभासीभवतीत्याह। मज्जोन्मज्जदिति॥ असकृदसौ देवतिर्य्यगादियोनिषु योऽयमुपजनो नानाविधदेहभेदसंपक्षो योऽन्वानुदधिस्तस्मिन्नतित्रासने भयावहे कदाचिद्यथोत्तमज्ञानं रूपेण मज्जदनभिव्यक्तमवतिष्ठते तदेव चावस्थाविषये तद्रूपेणोन्मज्जव्यक्तमनर्थकरं परिवर्त्तते। तदेवमतिक्रूरे संसारसागरे परिवर्त्तमानमस्मं स्वकार्य्यमाचार्य्यप्रसादादपनीतमासीदित्यर्थः। न

इत्यूह [illegible] पीगो[illegible]वत्पूज्यपादशिष्यस्य परमहंसपरि-व्राजक[illegible] तजननग्राहघो भगवतः कृतावागमशास्त्रविवरणे अलात[illegible]र दुर्लभं भूतु[illegible]प्रकरणं समाप्तम् । समाप्तोऽयं ग्रन्थश्च ॥ ओं तत् सत् ॥

---

केवलमेकस्य ममैव यथोक्तफलप्राप्तिराचार्यप्रसादादाविरभूत् किन्तु तच्चरणपरिचर्य्यापरायणानामन्येषामपि भूयसामित्याह । ददादाविति ॥ येषां गुरुचरणारविन्दद्वयमाश्रितानामन्येषामपि शिष्याणां तदीय-शुश्रूषाप्रणयमनीषाजुषां श्रुतिर्व्वननिदिध्यासनसहकृतं श्रवणज्ञानम् । शमः शान्तिरिन्द्रियोपरतिः । विनयोऽवनतिरनौद्धत्यं तेषामप्राप्तिरम्या श्रेष्ठा प्रतितिष्ठा सिध्यति । यस्मादमोघा सफला श्रवणादीनाम्प्राप्ति-स्तस्मादग्र्यत्वं तस्यां शंसा यते तदेवमाचार्य्यप्रसादान्ममेव नोऽन्येषाञ्च बहूनां पुरुषार्थपरिसमाप्तिसम्भवादाचार्य्यचरणं पुरुषार्थकामैरा-चरणीयमित्यर्थः ॥ २ ॥

विष्णुं कृष्णं स्वमायाविरचितविविधतत्वर्गं निसर्गा-
दुद्यातानर्थसार्थं निरवधिमधुरं कञ्चिदेकस्वभावम् ।
आद्यायात्मानमेकं विभिसुखविसुखं नेतितीति गीतं
वन्दे वाचां धियाञ्चापरमपि जगतामास्पदं कल्पितानाम् ॥ १ ॥
गौडपादीयभाष्यस्य व्याख्या व्याख्यातृसम्मता ।
सन्निता निर्म्मिता सेयमर्पिता पुरुषोत्तमे २॥

इति श्रीमत्परमहंसपरिव्राजकाचार्य्यज्ञानन्दपूज्यपादशिष्य-भगवदानन्दज्ञानकृतायां गौडपादीयभाष्यटीकायां अलातशान्त्याख्यं चतुर्थं प्रकरणं समाप्तम् ॥ ओं तत्सत् ॥ श्रीसद्गुरुः प्रीयतां ॥

गौडपादीयमाण्डूक्योपनिषत्कारिका समाप्ता ॥

---